KÂVYAMÂLÂ. 15



# THE KÂVYÂLANKÂRASÛTRAS

OF

# VÂMANA

with his own Vritti.

---

EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

---

1889.



*Price 9 Annas.*

काव्यमाला. १५.

पण्डितवरवामनविरचितानि

# काव्यालंकारसूत्राणि ।

वृत्तिसमेतानि ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितानि ।

तानि च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतानि ।

१८८९



मूल्यं ९ आणकाः ।

Jayadeva in the Court of Lakshmanasena

गोवर्धनश्च शरणो जयदेव उमापतिः।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥

इत्ययं श्लोकः लक्ष्मणसेनसभाद्वारे पार्श्वशिलायामुत्कीर्णः।

लक्ष्मणसेनश्च ख्रिस्तसम्वत्सरस्य द्वादशशतकसमाप्ति-पर्यन्तम् वङ्गदेशं पालयितः इति केचिद् ऐतिहासिकाः।

'उन्मीलन्मधुगन्धलुब्ध' इति पद्यं ख्रिस्तवर्षीय-चतुर्दश-शतक समुद्भवेन वङ्गदेशीयेन श्रीविश्वनाथ कविराजेन स्वसाहित्यदर्पणे दशमपरिच्छेदे वृत्त्यनुप्रासोदाहरण तया उपन्यस्तं दृश्यते। तेन गीतगोविन्दस्य सर्वोत्कर्षो सिद्ध्यति।

# वामनपण्डितः ।

...व्यालंकारसूत्राणां प्रणेता श्रीवामनपण्डितः क...
...यते. किं स्वयं ख्रिस्ताब्दीयसप्तमशतकोत्तरार्धान्न प्राच...
...उत्तररामचरितादिश्लोकानुदाहृतवान्. अथ च ध्वन्यालोकलोचने प्रथमो-
...अभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये
...समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं व्यतरद्ग्रन्थकृत्' इति वदन्तः श्रीमदा-
...गुप्तपादा ध्वन्यालोककर्तुः श्रीमदाचार्यानन्दवर्धनाद्वामनस्य प्राचीनत्वं प्रक-
...तस्मात्खिस्ताब्दीयनवमशतकोत्तरार्धान्नाधस्तनो वामनः. भाति चायं काश्मी-
...अष्टमशतके कश्मीरमहीपतेर्विपश्चिद्वरस्य श्रीजयापीडस्य मन्त्री कश्चन वामना-
...आसीत्. स एवायं काव्यालंकारसूत्रप्रणेतेत्यपि केचन काश्मीरका वदन्ति. ...
...वृत्तिकारो वामनस्त्वस्माद्भिन्न, प्राचीनश्च. ध्वन्यालोकलोचन-काव्यप्रकाश-अलंका-
...सर्वस्वादिग्रन्थरत्नेष्वपि वामनमतं समुपन्यस्तमुपलभ्यते. अस्मिन्ग्रन्थे वृत्तौ अमरुश-
...क-उत्तररामचरित-कादम्बरी-किरातार्जुनीय-कुमारसंभव-मृच्छकटिक-मेघदूत-रघुवंश-
...विक्रमोर्वशी-वीरचरित-वेणीसंहार-शाकुन्तल-शिशुपालवध-हर्षचरितादिग्रन्थेभ्यः समुद्धृ-
...त्योदाहरणानि दत्तानि सन्ति. किं च कामन्दकीनीति-नाममाला-हरिप्रबोधानाम्,
विशाखिल-शूद्रक-कविराजानां च नामान्यप्यत्र समुपलभ्यन्ते. महेश्वरकृता टीकाप्यस्य
ग्रन्थस्य वर्तते.

अयं ग्रन्थः प्रथमं १८७५ मिते ख्रिस्ताब्दे जर्मनीदेशे जेनाख्य(Jena)नगरे का-
प्लेर(Professor Cappeller)नाम्ना विदुषा मुद्रितः. तत्पुस्तकमस्मिन्देशे न
...लभम्. पुनः १८८३ मिते ख्रिस्ताब्दे कलकत्तानगरे आनन्दरामबडुयाभिधेन मुद्र-
...वा वाग्भटालंकार-सरस्वतीकण्ठाभरणाभ्यां संबद्ध एव स्थापितः, मुद्रणेऽपि सूत्र-

---

१. भवभूतिः ख्रिस्ताब्दीयसप्तमशतकोत्तरार्धे कान्यकुब्जमहीपालस्य यशोवर्मणः स-भायामासीदिति सुप्रसिद्धमेव. २. काव्यमालायां मुद्रितस्य ३७ पृष्ठे टीकायाम्. ३. क-श्मीरेष्ववन्तिवर्मराज्यसमये नवमशतकोत्तरार्धे श्रीमदानन्दवर्धन आसीदिति राजतर-ङ्गिण्याः प्रतीयते. ४. 'मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वाम-नाद्याश्च मन्त्रिणः ॥' इति राजतरङ्गिणी. ५. चीनदेशात्तीर्थयात्रार्थं भारतवर्षे सप्तम-शतकपूर्वार्धे कश्चन हुएन्-त्सङ्ग(Hiouen-Thsang)नामा पुरुषः समागतः. त-दात्र वामनप्रणीतायाः पाणिनिसूत्रव्याख्यायाः (काशिकायाः) पठनपाठनेषु प्रचार आ-सीदिति तदीययात्रावर्णनपुस्तकात्पाश्चात्यैः पण्डितैरधिगतम्. ६. विशाखिलः कला-शास्त्रकर्ता. ७. टीका त्वस्माभिर्नोपलब्धेति मूलग्रन्थ एव प्रकटीकृतः.

वृत्त्युदाहरणानां पार्थक्यं न सम्यग्विहितमिति तत्पुस्तकं हस्तलिखितपुस्तकसमानमेव. अतो वयमस्य प्रत्नस्यात्युपयुक्तस्य ग्रन्थस्य मुद्रणे प्रवृत्ताः.

तत्रास्मन्मुद्रणमूलभूतानि पुस्तकानि त्वेतानि—

क. जयपुरराजगुरुभट्टश्रीलक्ष्मीदत्तसूनुभट्टश्रीदत्तानां पुस्तकम्. प्रायः शुद्धम्. तत्पत्राणि ४०.

ख. कलकत्तामुद्रितम्.

ग. द्रविडवीरेश्वरशास्त्रिभिर्वाराणसीतः प्रहितम्. तत्तु नातिशुद्धमन्तिमाध्यायस्य त्रयस्त्रिंशन्मितसूत्रपर्यन्तमेवास्ति. तत्पत्राणि ६१.

एवं पुस्तकत्रयाधारेण मुद्रितानि सवृत्तीनि काव्यालंकारसूत्राण्येतानि प्रमोदावहानि भवन्त्वलंकारशास्त्रे प्रविविक्षूणां सच्छात्राणामिति शिवम्.

---

१. 'प्राचीनेष्वलंकारनिबन्धेषु (अस्मदवलोकितेषु) वामनवृत्तिरेवोत्कृष्टा। तस्यां हि क्वापि क्वापि स्वोक्तौ समीचीना युक्तिरुद्भाविता। (शब्दशुद्धिं विना) अप्रासङ्गिकविषयो नार्वाण, नापि च शृङ्गाररसः, यदनुषङ्गादश्लीलतादोषस्य संभवः। अत एव नास्ति तत्राश्लीलतादोषः। नापि चेयं वृत्तिरतीव विस्तृता। प्रसिद्धेषु तावदलंकारनिबन्धेषु बालानां प्रथमपाठोपयोगिनी एवैवेति मन्यामहे।' इति स्वमुद्रितकाव्यप्रकाशोपोद्घाते न्यायरत्नश्रीयुतमहेशचन्द्रपण्डिताः.

# काव्यालंकारसूत्राणां

## शुद्धिपत्रम् ।

| पृ. | प. | शुद्धम् । |
|---|---|---|
| ७ | १ | तादृक्कापि |
| ७ | ७ | अधिकारिचिन्ता रीति- |
| १० | २४ | पद्यभागवद्वृत्त- |
| १२ | ११ | महाकाव्यमिति । |
| २४ | १७ | उत्तरोष्ठ- |
| २६ | ४ | सौकुमार्योदारता |
| २७ | २२ | वारोहे |
| २८ | १५ | विप्रतिपत्तिः |
| २९ | २१ | वनाली |
| ३० | १३ | मधुश्च्युतः |
| ३४ | ४ | पश्यतीत्युक्तं |
| ४३ | १७ | क्लृप्ताङ्गरागो |
| ५३ | ३ | सा पीनो- |
| ५६ | १ | स व्यतिरेकः |
| ६४ | ८ | वलेरात्मनेपद- |
| ६५ | २४ | इति शब्दः |
| ६६ | ७ | सिध्यति |
| ६६ | १२ | 'श्रितादिषु गमिगाम्यादीना |
| ६८ | १ | 'तिङ्कृत्तद्धितसमासैः' इति |
| ६९ | २२ | सिध्यति |
| ७० | ९ | इत्यत्रारिहा रिपुहा |
| ७२ | २१ | सिध्यति |
| ७३ | १४ | 'कालाट्ठञ्' |
| ७३ | १६ | सिध्यति । 'कालाट्ठञ्' |
| ७६ | २ | सिध्यन्तीति |
| ७६ | ८ | 'वा संज्ञायाम्' |
| ७८ | ६ | प्रपीयेति |
| ७९ | १० | दौर्हार्दमिति |
| ७९ | १७ | 'उपर्यादिषु त्रिषु । द्वितीयाद्यो तान्तेषु' |

# काव्यालंकारसूत्राणां विषयानुक्रमः ।

अध्यायाः । पृष्ठाङ्कः ।

# काव्यमाला ।

पण्डितवरश्रीवामनविरचितानि

## काव्यालंकारसूत्राणि ।

वृत्तिसमेतानि ।

### शारीरं नाम प्रथममधिकरणम् ।

प्रथमोऽध्यायः ।

प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया ।
काव्यालंकारसूत्राणां स्वेषां[2] वृत्तिर्विधीयते ॥

व्यं ग्राह्यमलंकारात् ॥ १ ॥

व्यं खलु ग्राह्यमुपादेयं भवति । अलंकारात् । काव्यशब्दोऽयं गुणा-
स्कृतयोः शब्दार्थयोर्वर्तते । भक्त्या[3] तु शब्दार्थमात्रवचनोऽत्र गृह्यते ।
सावलंकार इत्यत आह—

र्यमलंकारः ॥ २ ॥

कृतिरलंकारः । करणव्युत्पत्त्या पुनरलंकारशब्दोऽयमुपमादिषु

षगुणालंकारहानादानाभ्याम् ॥ ३ ॥

ल्वलंकारो दोषहानात्, गुणालंकारादानाच्च संपाद्यः कवेः[4] ।

तस्ते ॥ ४ ॥

षगुणालंकारहानादाने शास्त्रादस्मात् । शास्त्रतो हि[7] ज्ञात्वा
त्, गुणालंकारांश्चाददीत ।

---

मात्मानं' क. २. 'तेषां' क. ३. 'शक्त्या' ख. लक्षणयेत्यर्थः. ४. 'कवेः' नास्ति. ५. 'कवेः शास्त्रतस्ते च' ख. ६. 'ते चैते' ख. ७. 'हि' क-पु. त.

किं पुनः फलमलंकारवता काव्येन येनैतदर्थोऽयं[1] यत्न इत्याह[2]—

**काव्यं सद्दृष्टादृष्टार्थम् । प्रीतिकीर्तिहेतुत्वात् ॥ ५ ॥**

काव्यं सच्चारु दृष्टप्रयोजनम् । प्रीतिहेतुत्वात् । अदृष्टप्रयोजन कीर्तिहेतुत्वात् । अत्र श्लोकाः[3]—

'प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।
अकीर्तिवर्तनीं त्वेवं[5] कुकवित्वविडम्बनाम् ॥
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्तिं तु[6] निरालोकनरकोद्देशदूतिकाम् ॥
तस्मात्कीर्तिमुपादातुमकीर्तिं तु[7] निवर्हितुम् ।
काव्यालंकारशास्त्रार्थः प्रसाद्यः कविपुंगवैः ॥

इति काव्यालंकारसूत्रवृत्तौ शारीरे प्रथमेऽधिकरणे प्रथमोऽध्यायः ।
प्रयोजनस्थापना ।

---

द्वितीयोऽध्यायः ।

अधिकारिनिरूपणार्थमाह—

**अरोचकिनः सतृणाभ्यवहारिणश्च कवयः[9] ॥ १ ॥**

इह खलु द्वये कवयः संभवन्ति—अरोचकिनः, सतृण... श्चेति । अरोचकिसतृणाभ्यवहारिशब्दौ[11] गौणार्थौ । कोऽर्... कित्वमविवेकित्वं चेति ।

तदाह[12]—

**पूर्वे शिष्याः । विवेकित्वात् ॥ २ ॥**

---

१. 'येन तदर्थोऽयं' क. २. 'इत्यत आह' क. ३. 'श्लोकः'... मार्गः. ५. 'त्वेन' क. ६. 'च' ख. ७. 'च व्यपोहितुम्' ख. ... स्थापनमधिकारि–' ख. ९. 'नास्ति रोचकं रुचिकरं द्रव्यं येषां... अपरिचितालंकारशास्त्रा इत्यर्थः । सतृणमभ्यवहरन्ति भुञ्जत इति सतृण... दोषगुणविवेकशून्या इत्यर्थः ।' इति ख-टिप्पणम्. 'सतृणमभ्यवह... वहारी अविवेकी ।' इति श्रीकण्ठचरितटीका (२।२८). १०. 'कव... नास्ति. ११. 'भ्यवहारिणौ' ख. १२. 'यदाह' क.

श्लो... त्वरोचकिनः शिष्याः शासनीयाः । विवेकित्वाद्विवेचनशील-
त्वात्...

...तद्विपर्ययात् ॥ ३ ॥

सतृणाभ्यवहारिणो न शिष्याः । तद्विपर्ययादविवेचनशीलत्वात् ।
...लमपाकर्तुं शक्यम् ।

न शास्त्रं सर्वानुग्राहि कुतस्तदुपादीयते तदाह—

शास्त्रमद्रव्येष्वर्थवत् ॥ ४ ॥

...लु शास्त्रमद्रव्येष्वविवेकिष्वर्थवत् ।

...र्शनमाह—

...तकं पङ्कप्र...नाय ॥ ५ ॥

...हि कतकं ...इव पङ्कस्य प्रसादनाय प्रभवति ।

...धिकारि...निरूप्य रीतिविनिश्चयार्थमाह—

रीतिरात्मा काव्यस्य ॥ ६ ॥ २९.४.६१

रीतिर्नामेयमात्मा काव्यस्य । शरीरस्येवेति वाक्यशेषः ।

का पुनरियं रीतिरित्याह—

...शिष्टा पदरचना रीतिः ॥ ७ ॥

...षवती पदानां रचना रीतिः ।

...ऽसौ विशेष इत्याह—

...शेषो गुणात्मा ॥ ८ ॥ गुणात्मा ओजःप्रसादादिगुणस्वभाव...

...यमाणगुणरूपो विशेषः ।

...त्रिधा—वैदर्भी गौडीया पाञ्चाली च ॥ ९ ॥

...चेयं रीतिस्त्रिधा भिद्यते—वैदर्भी, गौडीया, पाञ्चाली चेति ।

...'नुग्राहि स्यात्को वा मन्यते तदाह' क. २. प्रयोजनवदित्यर्थः. ३. कतकं ...ादको 'निर्मली' इति प्रसिद्धः फलविशेषः. ४. 'भवतीति' क. ५. 'रीतिनि-...' ख. ६. 'विशिष्टपद' क. ७. 'वैदर्भी गौडीया पाञ्चाली' इति ख-पुस्तके ...

...अधिका- ... ७. 'तत्पू-...' क.

किं पुनर्देशवशाद्द्रव्यवद्गुणोत्पत्तिः काव्यानाम्, येनायं देश-
विशेषव्यपदेशः । नैवम् । यदाह—

**विदर्भादिषु दृष्टत्वात्तत्समाख्या ॥ १० ॥**

विदर्भगौडपाञ्चालेषु देशेषु तत्रत्यैः कविभिर्यथास्वरूपमु-
पलब्धत्वात्तत्समाख्या । न पुनर्देशैः किंचिदुपक्रियते काव्यानाम् ।

तासां गुणभेदाद्भेदमाह—

**समग्रगुणा वैदर्भी ॥ ११ ॥**

समग्रैरोजःप्रसादप्रभृतिभिर्गुणैरुपेता वैदर्भी नाम रीतिः ।

अत्र श्लोकौ—

'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता ।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥

तामेकामेवं कवयः स्तुवन्ति—

'सति वक्तरि सत्यर्थे सति शब्दानुशासने ।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥'

अत्रोदाहरणम्—

'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

**ओजःकान्तिमती गौडीया ॥ १२ ॥**

ओजः कान्तिश्च विद्येते यस्यां सा ओजःकान्तिमती गौडी
रीतिः । माधुर्यसौकुमार्ययोरभावात् । समासबहुला अत्युल्बणपदा

---

१. 'देशविशेषे' ख. २. 'नैव' ख. ३. 'देशेषु' क-पुस्तके नास्ति. ४. 'त-
द्देशसमाख्या' क. ५. 'अत्र श्लोकौ' क-पुस्तके नास्ति. ६. 'अलंकारादिस-
तामेकामेव स्तुवन्ति कवयः' ख. ७. रीत्यात्मकं वस्तु. ८. 'अत्र' क-पुस्तके
९. अभिज्ञानशाकुन्तले द्वितीयेऽङ्के श्लोकः. १०. 'विद्यते यस्यां सेयं' क.

श्लोकः—

'समस्तात्युत्कटपदामोजःकान्तिगुणान्विताम् ।
गौडीयामिति गायन्ति रीतिं रीतिविचक्षणाः ॥'

रणम्—

'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
ष्टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥'

**र्यसौकुमार्योपपन्ना पाञ्चाली ॥ १३ ॥**

धुर्येण सौकुमार्येण च गुणेनोपपन्ना पाञ्चाली नाम रीतिः । ओजः-भावादनुल्बणपदा विच्छाया च ।

च श्लोकः—

'आश्लिष्टश्लथभावां तु पुराणच्छाययाश्रिताम् ।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥'

त्रोदाहरणम्—

'ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते
रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा ।
तेनोत्थाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥'

एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितमिति ।

**तासां पूर्वा ग्राह्या । गुणसाकल्यात् ॥ १४ ॥**

तासां तिसृणां रीतीनां पूर्वा वैदर्भी ग्राह्या । गुणानां साकल्यात् ।

**न पुनरितरे । स्तोकगुणत्वात् ॥ १५ ॥**

१. 'उद्भट' क. २. 'गुणाङ्किताम्' क. ३. 'अपि' क. ४. वीरचरित्रे प्रथमे... ५. 'पर्यस्त' क. ६. 'अनुल्बणश्लथविच्छाया च' क. ७. क-पुस्तके न... ८. 'तां' ख. ९. 'च्छायमाश्रितां' ख. १०. 'सुकुमारीं' ख. ११. 'अधिका-... ७. 'तत्पू-... 'निःकम्पः' क.
२. 'विवाह' क.
११. 'कारात्' क. १२. 'योग्यप्रवेशं' क.

इतरे गौडीयपाञ्चाल्यौ न ग्राह्ये । स्तोकगुणत्वात् ।

**तदारोहणार्थमितराभ्यास इत्येके ॥ १६ ॥**

तस्या वैदर्भ्या एवारोहणार्थमितरयोरपि रीत्योरभ्यास इत्येके म[...]

**तच्च न । अतत्त्वशीलस्य तत्त्वानिष्पत्तेः ॥ १७ ॥**

नह्यतत्त्वं शीलयतस्तत्त्वं निष्पद्यते ।

निदर्शनार्थमाह—

**न शणसूत्रवानाभ्यासे त्रसरसूत्रवानवैचित्र्यलाभः ॥ १८ ॥**

नहि शणसूत्रवानमभ्यस्यन्कुविन्दस्त्रसरसूत्रवानवैचित्र्यं लभते ।

**सापि समासाभावे शुद्धवैदर्भी ॥ १९ ॥**

सापि च वैदर्भी रीतिः शुद्धवैदर्भी भण्यते । यदि समासवत्प[दं न] भवति ।

**तस्यामर्थगुणसंपदास्वाद्या ॥ २० ॥**

तस्यां वैदर्भ्यामर्थगुणसंपदास्वाद्या भवति ।

**तदुपारोहादर्थगुणलेशोऽपि ॥ २१ ॥**

तदुपधानतः खल्वर्थलेशोऽपि स्वदते । किमङ्ग, पुनरर्थगुणसंपत् ।

तथा चाहुः—

'किं त्वस्ति काचिदपरैव पदानुपूर्वी
यस्यां न किंचिदपि किंचिदिवावभाति ।
आनन्दयत्यथ च कर्णपथं प्रयाता
चेतः सताममृतवृष्टिरिव प्रविष्टा ॥
वचसि यमधिगम्य स्पन्दते वाचकश्री-
र्वितथमपि तथात्वं यत्र वस्तु प्रयाति ।

---

१. क-पुस्तके इयं वृत्तिर्नास्ति. २. ख-पुस्तके 'तच्च न' इति सूत्रबहिर्भूतम्; 'तन्न' [...] ३. 'सण' क. ४. 'वाने' ख. ५. 'सण' क. ६. 'तन्तु' क. ७. 'वैचित्री' [...] ८. 'सापि च समासाभावे शुद्धवैदर्भी भण्यते । यदि समासवत्पदं न भवति तस्यां [...]तोऽर्थगुणसंपत्स्वाद्या भवति । तदुपारोहादर्थगुणलेशोऽपि तदुपदानतः ॥ १९ ॥ [...] ९. 'समासवत्पदं' क. १०. 'यथात्वं' क.

उदयति हि स तादृक्क्वापि वैदर्भरीतौ
सहृदयहृदयानां रञ्जकः कोऽपि पाकः ॥

**सापि वैदर्भी । तात्स्थ्यात् ॥ २२ ॥**

सापीयमर्थगुणसंपद्वैदर्भीत्युक्ता । तात्स्थ्यादित्युपचारतो व्यवहारं दर्शयति ।

इति काव्यालंकारसूत्रवृत्तौ शारीरे प्रथमेऽधिकरणे द्वितीयोऽध्यायः ।
अधिकारचिन्तारीतिनिश्चयश्च ।

---

तृतीयोऽध्यायः ।

रीतितत्त्वं निरूप्य काव्याङ्गान्युपदर्शयितुमाह—

**लोको विद्या प्रकीर्णं च काव्याङ्गानि ॥ १ ॥**

उद्देशक्रमेणैतद्व्याचष्टे—

**लोकवृत्तं लोकः ॥ २ ॥**

लोकः स्थावरजङ्गमात्मा तस्य वर्तनं वृत्तमिति ।

**शब्दस्मृत्यभिधानकोषच्छन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वा विद्या ॥ ३ ॥**

शब्दस्मृत्यादीनां तत्पूर्वकत्वं पूर्वं काव्यबन्धेष्वपेक्षणीयत्वात् ।

तासां काव्याङ्गत्वं योजयितुमाह—

**शब्दस्मृतेः शब्दशुद्धिः ॥ ४ ॥**

शब्दस्मृतेर्व्याकरणाच्छब्दानां शुद्धिः साधुत्वनिश्चयः कर्तव्यः । शुद्धानि हि पदानि निःशङ्कैः कविभिः प्रयुज्यन्ते ।

**अभिधानकोषतः पदार्थनिश्चयः ॥ ५ ॥**

पदं हि रचनाप्रवेशयोग्यं भावयन्संदिग्धार्थत्वेन न गृह्णीयान्न वा जह्यादिति काव्यबन्धविघ्नः । तस्मादभिधानकोषतः पदार्थनिश्चयः कर्तव्य

---

१. 'सापीयं' ख. २. 'वैदर्भी उक्ता' ख. ३. ख-पुस्तके नास्ति. ४. 'अधिकारवृत्तां रीतिनिश्चयं च निरूप्य' ख. ५. 'क्रमेणैव' ख. ६. 'विद्याः' क. ७. 'तत्पूर्वत्वं काव्य' क. ८. 'साधुत्वे' क. ९. क-पुस्तके नास्ति. १०. 'निःकम्पैः' क. ११. 'कोशात्' क. १२. 'कोशतोऽर्थ' क.

इति । अपूर्वाभिधानलाभार्थत्वं त्वयुक्तमभिधानकोषस्य । अप्रयुक्तस्य[1] प्रयोज्यत्वात् । यदि प्रयुक्तं प्रयुज्यते तर्हि किमिति संदिग्धार्थत्वमाशङ्कितं पदस्य । तन्न । तत्र सामान्येना[2]र्थावगतिः संभवति । यथा नीवीशब्देन जघनवस्त्रग्रन्थि[3]रुच्यत इति कस्यचिन्निश्चयः । स्त्रिया वा पुरुषस्य वेति संशयो 'नीवी संग्रथनं नार्या जघनस्थस्य वाससः' इति नाममालाप्रतीकमपश्यत इति । अथ कथं[4]

'केनाचित्पूर्वमुक्तोऽपि नीवीबन्धः श्लथीकृतः ।
विचित्रभोजनाभोगवर्धमानोदरादिना ॥'

इति प्रयोगः । भ्रान्तेरु[5]पचाराद्वा ।

**छन्दोविचितेर्वृ[6]त्तसंशयच्छेदः ॥ ६ ॥**

काव्याभ्यासाद्वृत्तसंक्रान्तिर्भवत्येव । किं तु मात्रावृत्तादिषु क्वचित्संशयः स्यात् । अतो वृत्तसं[7]शयच्छेदश्छन्दोविचितेर्विधेय[8] इति ।

**कलाशास्त्रेभ्यः कलातत्त्व[9]स्य संवित् ॥ ७ ॥**

कला गीतनृत्यचित्रादिकास्तासामभिधायकानि शास्त्राणि विशाखिलादिप्रणीतानि कलाशास्त्राणि तेभ्यः कलातत्त्वस्य संवित्संवेदनम्[10] नहि कलातत्त्वानुपलब्धौ कलावस्तु सम्यङ्निबद्धुं शक्यमिति ।

**कामशास्त्रतः कामोपचारस्य ॥ ८ ॥**

संविदित्य[11]नुवर्तते । कामोपचारस्य संवित्कामशास्त्रत इति । कामोपचारबहुलं हि[12] वस्तु[13] काव्यस्येति ।

**दण्डनीतेर्नयापनययोः ॥ ९ ॥**

दण्डनीतेरर्थशास्त्रान्नयस्यापनयस्य च [14]संविदिति । तत्र षाड्गुण्यस्य

---

१. ख-पुस्तके नास्ति. २. 'सामान्येनापि' क. ३. 'नीविराग्रन्थनं' ख. ४. 'अथ कथं केनचित् पूर्वमुक्तो नीवीबन्धः श्लथीकृत इति प्रयोगः' ख. ५. लक्षणयेत्यर्थः. 'उपमानाद्वा' क. ६. 'वृत्तं' ख. ७. 'छन्दःशास्त्रतः' क. ८. ख-पुस्तके नास्ति. ९. 'तत्त्वसंवित्' क. १०. 'संवेदना' ख. ११. 'संविदिति [illegible]नुवर्तते' क. १२. क-पुस्तके नास्ति. १३. प्रतिपाद्यमित्यर्थः. १४. 'संविज्ज्ञानं' ख.

[...]वत्प्रयोगो नयः । तद्विपरीतोऽपनयः । नहि तावविज्ञाय नायकप्र[...]ायकयोर्वृत्तं शक्यं काव्ये निबद्धुमिति ।[1]

**इतिवृत्तकुटिलत्वं च ततः ॥ १० ॥**[2]

इतिहासादिरितिवृत्तं काव्यशरीरम्[3] । तस्य कुटिलत्वं ततो दण्डनीते[...]ीयस्त्वावलीयस्त्वादिप्रयोगो व्युत्पत्तिमूलत्वात्तस्याः[4] । एवमन्यासामविद्यानां यथास्वमुपयोगो[5] वर्णनीय इति ।

**लक्ष्यज्ञत्वमभियोगो वृद्धसेवावेक्षणं प्रतिभानमवधानं च प्रकीर्णम् ॥ ११ ॥**

**तत्र काव्यपरिचयो लक्ष्यज्ञत्वम् ॥ १२ ॥**[6]

अन्येषां[7] काव्येषु परिचयो लक्ष्यज्ञत्वम् । ततो हि काव्यबन्धस्य व्युत्पत्तिर्भवति ॥

**काव्यबन्धोद्यमोऽभियोगः ॥ १३ ॥**

काव्यस्य बन्धनं रचना काव्यबन्धः[8] । तत्रोद्यमोऽभियोगः । स हि[9] कवित्वप्रकर्षमेवं संदधाति[10] ।

**काव्योपदेशगुरुशुश्रूषणं[11] वृद्धसेवा ॥ १४ ॥**

काव्योपदेशे गुरव उपदेष्टारः[12] । तेषां शुश्रूषणं वृद्धसेवा । ततः काव्यविद्यायाः संक्रान्तिर्भवति[13] ।

**पदाधानोद्धरणमवेक्षणम्[14] ॥ १५ ॥**

पदस्याधानं न्यासः । उद्धरणमपसारणम्[15] । तयोः[16] खल्ववेक्षणम् ।

अत्र श्लोकौ—

> 'आधानोद्धरणे तावद्यावद्दोलायते मनः ।
> पदस्य स्थापिते[17] स्थैर्ये हन्त सिद्धा सरस्वती ॥

---

१. काव्येषु निबद्धुं शक्यमिति. २. 'ततः इतिहासादि' क. ३. 'काव्यार्थ' ख. ४. 'राबलीयसादिप्रयोगव्युत्पत्ति' क. ५. 'यथायथं' ख. ६. ख-पुस्तके एतत्सूत्रं पूर्वसूत्रान्तर्गतमेव स्थापितम्. ७. 'अन्येषु' क. ८. 'रचना काव्यबन्धः' इति ख-पुस्तके नास्ति. ९. क-पुस्तके नास्ति. १०. 'आराधयति' क. ११. 'शुश्रूषणं च' क. १२. क-पुस्तके नास्ति. १३. 'काव्यच्छाया संक्रामति' क. १४. 'पदाधानोद्धरणे चावेक्षणम्' ख. १५. 'अपसारः' क. १६. 'तत्' क. १७. 'आस्थापिते' ख.

'स्त्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥'

**कवित्वबीजं प्रतिभानम् ॥ १६ ॥**

कवित्वस्य बीजं कवित्वबीजं [1]जन्मान्तरागतसंस्कारविशेषः कश्चि यस्माद्बीजं[2] विना काव्यं न निष्पद्यते । निष्पन्नं वा[3]वहास्यायतनं स्यल्ँपुरु

**चित्तैकाग्र्यमवधानम् ॥ १७ ॥**

चि[4]त्तस्यैकाग्र्यं बाह्यार्थनिवृत्तिः । तदवधानम् । अवहितं हि मे[5]र्थान्पश्यति ।

**तद्देशकालाभ्याम् ॥ १८ ॥**

तदवधानं दे[6]शात्कालाच्च समुत्पद्यते ।

कौ पुनर्दे[7]शकालावित्याह—

**विविक्तो देशः ॥ १९ ॥**

विविक्तो निर्जनः ।

**रात्रियामस्तुरीयः कालः ॥ २० ॥**

रात्रेर्यामो रात्रियामः प्रहरस्तुरीयश्चतुर्थः काल इति । तद्वशाद्वि[8]षयोपरतं प्रसन्नं चित्तमवधत्ते ।

एवं काव्याङ्गान्युपदर्श्य का[9]व्यविशेषकथनार्थमाह—

**काव्यं गद्यं पद्यं च ॥ २१ ॥**

गद्यस्य [10]पूर्वं निर्देशो दुर्लक्ष्यविषयत्वेन दुर्बन्धत्वात् । यथाहुः—'गद्यं कवीनां निकषं वदन्ति' ।

तच्च त्रिधा भिन्नमिति दर्शयितुमाह—

**गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायं च ॥ २२ ॥**

तल्लक्षणान्याह—

**पद्यभागवद्वृत्तगन्धि ॥ २३ ॥**

---

१. 'जन्मान्तरागत' इति क-पुस्तके नास्ति. २. ख-पुस्तके नास्ति. ३. 'चहास्यायतनं' क. ४. 'चित्तैकाग्र्यमन्यार्थविनिवृत्तिः' ख. ५. 'अर्थान्न पतति' क ६. 'देशकालाभ्यां संपद्यते' क. ७. ख-पुस्तके नास्ति. ८. 'विषयादुप' क. ९. 'काव्यविशेषस्य ज्ञानार्थमाह' ख. १०. 'पूर्वनिर्देशो दुर्बन्धत्वात् विषयस्य दुर्बोधत्वात्' ख.

पद्यस्य भागाः पद्यभागास्तद्वद्वृत्तगन्धि ।

यथा—'पातालतालुतलवासिषु दानवेषु' इति ।

अत्र हि वसन्ततिलकाख्यस्य वृत्तस्य भागः प्रत्यभिज्ञायते ।

**अनाविद्धललितपदं चूर्णम् ॥ २४ ॥**

अनाविद्धान्यदीर्घसमासानि ललितान्यनुद्धतानि पदानि यस्मिंस्तदना-विद्धललितपदं चूर्णमिति ।

यथा—'अभ्यासो हि कर्मणां कौशलमावहति । नहि सकृन्निपात-मात्रेणोदविन्दुरपि ग्रावणि निम्नतामादधाति' ।

**विपरीतमुत्कलिकाप्रायम् ॥ २५ ॥**

विपरीतमाविद्धोद्धतपदमुत्कलिकाप्रायम् ।

यथा—'कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकु-म्भस्थलगलन्मदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि' इति ।

**पद्यमनेकभेदम् ॥ २६ ॥**

पद्यं खल्वनेकेन समार्धसमविषमादिना भेदेन भिन्नं भवति ।

**तदनिबद्धं निबद्धं च ॥ २७ ॥**

तदिदं गद्यपद्यरूपं काव्यमनिबद्धं निबद्धं च । अनयोः प्रसिद्धत्वा-ल्लक्षणं नोक्तम् ।

**क्रमसिद्धिस्तयोः स्रगुत्तंसवत् ॥ २८ ॥** ...ष कथं रो-

तयोरित्यनिबद्धं निबद्धं च परामृश्यते । क्रमेण सिद्धिः

अनिबद्धसिद्धौ निबद्धसिद्धिः स्रगुत्तंसवत् । यथा स्र

ग्गामुत्तंसः शेखरः सिध्यतीति ।	यथा—

केचिदनिबद्ध एव पर्यवसितास्तद्दूषणार्थमाह—	गुणाः ।

**नानिबद्धं चकास्त्येकतेजः परमाणुवत् ॥ २९ ।**

न खल्वनिबद्धं काव्यं चकास्ति दीप्यते । यथैकतेजः 'हि' क-पुस्तके

१. 'निपतितमात्रेण' क. २. 'भार' क-पुस्तके नास्ति. ३. त्कारकवैयर्थ्यम्' क. ४ ख-पुस्तके नास्ति. ५. 'स्रग्दूषणार्थं' ख. ६. 'इवेति' ख. ...क्तं यत्र शास्त्रे ...तके नास्ति. ख.

अत्र श्लोकः—

'असंकलितरूपाणां काव्यानां नास्ति चारुता।
न प्रत्येकं प्रकाशन्ते तैजसाः परमाणवः ॥'

**संदर्भेषु दशरूपकं श्रेयः ॥ ३० ॥**

संदर्भेषु प्रबन्धेषु दशरूपकं नाटकादि श्रेयः।

कस्मात्तदाह—

**तद्धि चित्रं चित्रपटवद्विशेषसाकल्यात् ॥ ३१ ॥**

तद्दशरूपकं हि यस्माच्चित्रं चित्रपटवत्। विशेषाणां साकल्यात्।

**ततोऽन्यभेदक्लृप्तिः ॥ ३२ ॥**

ततो दशरूपकादन्येषां भेदानां क्लृप्तिः कल्पनमिति। दशरूपकस्यैव हीदं सर्वं विलसितम्। यच्च कथाख्यायिके महाकाव्यमिति तल्लक्षणं च नातीव हृदयंगममित्युपेक्षितमस्माभिः। तदन्यतो ग्राह्यम्।

इति काव्यालंकारसूत्रवृत्तौ शारीरे प्रथमेऽधिकरणे तृतीयोऽध्यायः।
काव्याङ्गानि काव्यविशेषाश्च।

**समाप्तं चेदं शारीरं प्रथममधिकरणम्।**

---

## दोषदर्शनं नाम द्वितीयमधिकरणम्।

### प्रथमोऽध्यायः।

काव्यशरीरे स्थापिते काव्यसौन्दर्याक्षेपहेतवस्त्यागाय दोषा विज्ञातव्या इति तद्दर्शनं नामाधिकरणमारभ्यते।

कवीनां निकषं वर्गमाह—

**तच्च त्रिधा भिन्ना दोषाः ॥ १ ॥**

गद्यं वृत्तगन्धीनां ये विपर्ययास्तदात्मानो दोषाः।

**तल्लक्षणान्यमः ॥ २ ॥**

पद्यभागरूपणात्तेषां दोषाणामर्थादवगमोऽर्थसिद्धिः।

---

१. 'जन्मा'-पुस्तके नास्ति. २. 'तद्धिचित्रं' ख. ३. 'दशरूपकमेव' क. ४. 'यहास्यायतनं'-पुस्तके नास्ति. ६. 'तदन्यदूह्यम्' ख. ७. 'च' क-पुस्तके नास्ति. ६. 'देश'-पुस्तके नास्ति. ९. 'ज्ञातव्या' ख. १०. 'नाम' क-पुस्तके नास्ति.

तमर्थं ते पृथक्प्रपञ्चयन्त इत्याह—

सौकर्याय प्रपञ्चः ॥ ३ ॥

सौकर्यार्थं प्रपञ्चो विस्तरो[1] दोषाणाम् । उद्दिष्टलक्षणा हि दोषाः सुज्ञाता भवन्ति ।

पददोषान्दर्शयितुमाह—

दुष्टं पदमसाधु कष्टं ग्राम्यमप्रतीतमनर्थकं च ॥ ४ ॥

क्रमेण व्याख्यातुमाह—

शब्दस्मृतिविरुद्धमसाधु ॥ ५ ॥

शब्दस्मृत्या व्याकरणेन विरुद्धं पदमसाधु[2] । यथा—'अन्यकारकवैयर्थ्यम्' इति । अत्र हि[3] 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' इति दुका[4] भवितव्यमिति ।

श्रुतिविरसं कष्टम् ॥ ६ ॥[5]

श्रुतिविरसं श्रोत्रकटुपदं कष्टम् । तद्धि[6] रचनागुम्फितमप्युद्वेजयति । यथा—

'अचूचुरच्चण्डि कपोलयोस्ते कान्तिद्रवं द्राग्विशदः शशाङ्कः ।'

लोकमात्रप्रयुक्तं ग्राम्यम् ॥ ७ ॥

लोक एव यत्प्रयुक्तं[7] पदं न शास्त्रे तद्ग्राम्यम् । यथा—'कष्टं कथं रोदिति फूत्कृतेयम्' । अन्यदपि तल्ल[8]गल्लादिकं द्रष्टव्यम् ।

शास्त्रमात्रप्रयुक्तमप्रतीतम् ॥ ८ ॥

शास्त्र एव प्रयुक्तं यन्न लोके तदप्रतीतं पदम्[9] । यथा—

'किं भाषितेन बहुना रूपस्कन्धस्य[10] सन्ति मे न गुणाः ।
गुणानान्तरीयकं[11] च प्रेमेति न मेऽस्त्युपालम्भः[12] ॥'

---

१. 'विस्तरो' क-पुस्तके नास्ति. २. 'असाधुपदम्' क. ३. 'हि' क-पुस्तके नास्ति. ४. 'अन्यः कारकः' इति विग्रहे दुगागमो भवति. तेन 'अन्यत्कारकवैयर्थ्यम्' इति साधु. ५. क-पुस्तके सूत्रमेतत्त्रुटितम्. ६. 'तद्विरचनात्' क. ७. प्रयुक्तं यन्न शास्त्रे ग्राम्यं पदम्. ८. 'भल्ल' क. तल्लशब्दस्तडागवाचकः. ९. 'पदम्' क-पुस्तके नास्ति. १०. इन्द्रियपञ्चकस्य. ११. गुणमान्तरीयकं च क. १२. ऽस्तुउपालम्भः ख.

अत्र रूपस्कन्धान्तरीयकौ न लोक इत्यप्रतीतम् ।

**पूरणार्थमनर्थकम् ॥ ९ ॥**

पूरणमात्रप्रयोजनमव्ययपदमनर्थकम् । दण्डापूपन्यायेन पदमन्यदप्यनर्थकमेवं[1] । यथा—

'उदितस्तु हास्तिकविनीलमयं तिमिरं निपीय किरणैः सविता ।'

[2]अत्र तुशब्दस्य पादपूरणार्थमेव प्रयोगः, न वाक्यालंकारार्थम् । वाक्यालंकारप्रयोजनं तु नानर्थकम्[3] । अपवादार्थमिदम् । यथा—

'न खल्विह गतागता नयनगोचरं मे गता' इति ।

[4]तथा हि खलु हन्तेति ।

संप्रति पदार्थदोषानाह[5]—

**अन्यार्थनेयगूढार्थाश्लीलक्लिष्टानि[6] च ॥ १० ॥**

[7]दुष्टं पदमित्यनुवर्तते । [8]अर्थतश्च वचनविपरिणामः । [9]अन्यार्थादीनि पदानि दुष्टानीति सूत्रार्थः ।

एषां क्रमेण लक्षणान्याह—

**रूढिच्युतमन्यार्थम् ॥ ११ ॥**

[10]रूढिषु च्युतं रूढिमनपेक्ष्य यौगिकार्थमात्रोपादानादन्यार्थं पदम् । स्थूलत्वात्सामान्येन घटशब्दः पटशब्दार्थ इत्यादिकमन्यार्थं नोक्तम् । यथा—

'ते दुःखमुच्चावचमावहन्ति ये प्रस्मरन्ति प्रियसंगमानाम् ।'

अत्रावहतिः करोत्यर्थो धारणार्थे प्रयुक्तः, प्रस्मरतिर्विस्मरणार्थः प्रकृष्टस्मरण इति ।

**कल्पितार्थं नेयार्थम् ॥ १२ ॥**

---

१. 'एव' क-पुस्तके नास्ति. २. क-पुस्तके नास्ति. ३. 'नारञ्जकम्' क. ४. तथेत्यादिका पङ्क्तिः क-पुस्तके नास्ति. ५. 'दोषं' क. ६. 'श्लिष्टानि' क. ७. 'प[illegible] दुष्टं' क. ८. 'अर्थाच्च विभक्तिविपरिणामः' क; 'अर्थतश्च वचनं परिणामः' ख. [illegible] 'अन्यार्थनेयानेयादीनि' ख. १०. 'रूढिच्युतं' ख.

४. 'य- ... नास्ति. ... नास्ति.

अर्थेऽश्रुतस्याप्यन्यस्य पदार्थस्य कल्पनात्कल्पितार्थं नेयार्थम्[1] । यथा—

'सपदि पङ्क्तिविहंगमनामभृत्तनयसंवलितं बलशालिना ।
विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकजिता जितम् ॥'

अत्र विहंगमश्चक्रवाकोऽभिप्रेतः । तन्नामानि चक्राणि । तानि[2] बिभ्रतीति विहंगमनामभृतो रथाः । पङ्क्तिरिति दशसंख्या लक्ष्यते । पङ्क्तिर्दश विहंगमनामभृतो रथा[3] यस्य स पङ्क्तिविहंगमनामभृद्दशरथः । तस्य तनयाभ्यां रामलक्ष्मणाभ्यां संवलितं प्लवगसैन्यं जितम् । उलूकजिता इन्द्रजिता । कौशिकशब्देनेन्द्रोलूकयोरभिधानमिति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक उक्तः । ननु चैवं रथाङ्गनामादीनामपि प्रयोगोऽनुपपन्नः[4] । न । तेषां निरूढ[5]लक्षणत्वात् ।

**अप्रसिद्धार्थप्रयुक्तं गूढार्थम् ॥ १३ ॥**

यस्य पदस्य[6] लोकेऽर्थः प्रसिद्धश्चाप्रसिद्धश्च तदप्रसिद्धेऽर्थे[7] प्रयुक्तं गूढार्थम् ।

यथा—

'सहस्रगोरिवानीकं दुःसहं भवतः परैः' इति ।

सहस्रं गावोऽक्षीणि यस्य स सहस्रगुरिन्द्रः । तस्येवेति गोशब्दस्याक्षिवाचित्वं[8] कविष्वप्रसिद्धमिति[9][10] ।

**असभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाश्लीलम्[11] ॥ १४ ॥**

यस्य पदस्यानेकार्थस्यैकोऽर्थोऽसभ्यः स्यात्तदसभ्यार्थान्तरम् ।

यथा—'वर्चः' इति पदं तेजसि विष्ठायां च ।

यत्तु पदमेकदेशद्वारेणासभ्यार्थं स्मारयति तदसभ्यस्मृतिहेतुः ।

यथा—'कृकाटिका' इति ।

---

१. 'अश्रुतार्थस्य कल्पना कल्पितार्थे' ख. २. 'तानि' ख-पुस्तके नास्ति. ३. 'रथा' क-पुस्तके नास्ति. ४. 'रथाङ्गनामप्रयोगो' ख. ५. 'रूढ' ख. ६. 'पदस्य' ख-पुस्तके नास्ति. ७. 'प्रसिद्धार्थे' ख. ८. 'वाचकत्वात्' ख. ९. 'कविषु' क-पुस्तके नास्ति. १०. 'इति' ख-पुस्तके नास्ति. ११. 'स्मृतिकरमश्लीलम्' क.

**न गुप्तलक्षितसंवृतानि ॥ १५ ॥**

अपवादार्थमिदम् । गुप्तं लक्षितं संवृतं च नाश्लीलम् । एषां लक्षणान्याह—

**अप्रसिद्धासभ्यं गुप्तम् ॥ १६ ॥**

अप्रसिद्धासभ्यार्थान्तरं पदमप्रसिद्धासभ्यम् । तद्गुप्तम् । यथा—'संबाधः' इति पदम् । तद्धि संकटार्थं प्रसिद्धम्, न गुह्यार्थमिति ।

**लाक्षणिकासभ्यान्वितं लक्षितम् ॥ १७ ॥**

तदेवासभ्यार्थान्तरं लाक्षणिकेनासभ्येनार्थेनान्वितं पदं लक्षितम् । यथा—'जन्मभूमिः' इति ।

तद्धि लक्षणया गुह्यार्थम्, न स्वशक्त्येति ।

**लोकसंवीतं संवृतम् ॥ १८ ॥**

लोकेन संवीतं लोकसंवीतं यत्तत्संवृतम् । यथा—'सुभगा' 'भगिनी' 'उपस्थानम्' 'अभिप्रेतम्' 'कुमारी' 'दोहदम्' इति ।

अत्र हि श्लोकः—

> 'संवीतस्य हि लोकेन न दोषान्वेषणं क्षमम् ।
> शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावना ॥'

**त्रैविध्यम् । व्रीडाजुगुप्सामङ्गलातङ्कदायिभेदात् ॥ १९ ॥**

तस्याश्लीलस्य त्रैविध्यं भवति । व्रीडाजुगुप्सामङ्गलातङ्कदायिनां भेदात् । किंचिद्व्रीडादायि भवति । यथा—'वाक्चाटवम्' 'हिरण्यरेताः' इति । किंचिज्जुगुप्सादायि भवति । यथा 'कपर्दकः' इति । किंचिदमङ्गलातङ्कदायि भवति । यथा 'संस्थितः' इति ।

**व्यवहितार्थप्रत्ययं क्लिष्टम् ॥ २० ॥**

---

१. 'संवृतं लक्षितं ना–' २. 'गुप्तं पदं—यथा' ख. ३. 'प्रसिद्धसंकटार्थम्' क. ४. 'लाक्षणिकासभ्यं' क. ५. 'सभ्यार्थान्तरलाक्ष–' ख. ६. 'लोकसंवीतमनुज्ञातं संवृतम् । यथा' क. ७. 'हि' ख-पुस्तके नास्ति. ८. 'कृतम्' क. ९. 'भवति' क-पुस्तके नास्ति. १०. 'संस्थितम्' ख.

अर्थस्य प्रतीतिरर्थप्रत्ययः । स व्यवहितो यस्माद्भवति तद्व्यवहितार्थप्रत्ययं क्लिष्टम् । यथा—

'दक्षात्मजादयितवल्लभवेदिकानां
ज्योत्स्नाजुषां जललवास्तरलं पतन्ति ॥'

दक्षात्मजास्ताराः । तासां दयितो दक्षात्मजादयितश्चन्द्रः । तस्य वल्लभाश्चन्द्रकान्ताः । तद्वेदिकानामिति । अत्र हि व्यवधानेनार्थप्रत्ययः ।

**अरूढार्थत्वात् ॥ २१ ॥**

अरूढार्थत्वेऽपि यतोऽर्थप्रत्ययो झटिति न, तत्क्लिष्टम् । यथा—
'काञ्चीगुणस्थानमनिन्दितायाः' इति ।

**अन्त्याभ्यां वाक्यं व्याख्यातम् ॥ २२ ॥**

अश्लीलं क्लिष्टं चेत्यन्त्ये[1] पदे । ताभ्यां वाक्यं व्याख्यातम् । तदप्यश्लीलं क्लिष्टं च भवति । अश्लीलं यथा—

'न सा धनोन्नतिर्या स्यात्कलत्रसुखदायिनी[2] ।
परार्थबद्धकक्षाणां यत्सत्यं पेलवं धनम् ॥'

'सोपानपथमुत्सृज्य वायुवेगसमुद्धतम्[3] ।
महापथेन गतवान्कीर्त्यमानगुणो जनैः ॥'

क्लिष्टं यथा—

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

एतान्पञ्च पदार्थदोषान्विभक्ताञ्ज्ञात्वा कविस्त्यजेदिति तात्पर्यार्थः ।

इति काव्यालंकारसूत्रवृत्तौ दोषदर्शने द्वितीयेऽधिकरणे प्रथमोऽध्यायः ।
पदपदार्थदोषविभागः[4] ।

---

१. 'च अन्त्ये' ख. २. 'रतिदायिनी' क-ग. ३. 'समुद्धतः' क-ग. ४. 'पदपदार्थ' क. 'एतान्यपि च पदपदार्थ' ग.

## द्वितीयोऽध्यायः ।

इदानीं वाक्यदोषान्दर्शयितुमाह[1]—

**भिन्नवृत्तयतिभ्रष्टविसंधीनि वाक्यानि ॥ १ ॥**

दुष्टानीत्यभिसंबन्धः[2] ।

क्रमेण व्याचष्टे—

**स्वलक्षणच्युतवृत्तं भिन्नवृत्तम् ॥ २ ॥**

स्वस्माल्लक्षणाच्च्युतं वृत्तं यस्मिंस्तत्स्वलक्षणच्युतवृत्तं वाक्यं भिन्नवृत्तम् । यथा—'अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम् ।' वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धम् । तच्च कृतमिति भिन्नवृत्तत्वम् ।

**विरसविरामं यतिभ्रष्टम् ॥ ३ ॥**

विरसः श्रुतिकटुर्विरामो यस्मिंस्तद्विरसविरामं यतिभ्रष्टम् ।

**तद्धातुनामभागभेदे स्वरसंध्यकृते प्रायेण ॥ ४ ॥**

तद्यतिभ्रष्टं धातुभागभेदे नामभागभेदे च सति भवति । स्वरसंधिनाऽकृते प्रायेण बाहुल्येन । धातुभागभेदे मन्दाक्रान्तायां[3] यथा—'एतासां राजति सुमनसां दाम कण्ठावलम्बि ।'

नामभागभेदे शिखरिण्यां यथा[4]—'कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः ।'

मन्दाक्रान्तायां[5] यथा—'दुर्दर्शश्चक्रशिखिकपिशः शार्ङ्गिणो बाहुदण्डः ।'

धातुनामभागपदग्रहणात्तद्भागातिरिक्तभेदे न भवति यतिभ्रष्टत्वम् । यथा मन्दाक्रान्तायाम्[6]—'शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः ।'[7]

शिखरिण्यां यथा[8]—'विनिद्रः श्यामान्तेष्वधरपुटसीत्कारविरुतैः[9] ।'

---

१ 'पदपदार्थदोषान्प्रतिपाद्य इदानीं—' क. २. 'इति संबन्धः' ग. ३. 'मन्दाक्रान्तायां' क-ग पुस्तकयोर्नास्ति. ४. 'यथा शिखरिण्याम्' ग. ५. 'मन्दाक्रान्तायां' क-ग-पुस्तकयोर्नास्ति. ६. 'मन्दाक्रान्तायां यथा' क-पुस्तके नास्ति. ७. असमदग्रे ख-पुस्तके "अन्ये तु पदान्त एव प्रतिसिध्यन्ति पदं च विभक्त्यन्तम् । यथा—'निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी । अवस्थामापन्ना मदनदहनोद्दामविधुरा प्रियं नः कल्याणी रमयति मनः कम्पयति च ॥". इत्यधिकमस्ति. ८. 'शिखरिण्यां यथा' क-पुस्तके नास्ति. ९. 'चीत्कार' क-ग.

स्वरसंध्यकृत इति वचनात्स्वरसंधिकृते भेदे न दोषः । यथा—'किंचिद्भावालसमसरलं प्रेक्षितं सुन्दरीणाम् ।'

**न वृत्तदोषात्पृथग्यतिदोषः । वृत्तस्य यत्यात्मकत्वात् ॥ ५ ॥**

वृत्तदोषात्पृथग्यतिदोषो न वक्तव्यः । वृत्तस्य यत्यात्मकत्वात् ।

यत्यात्मकं हि वृत्तमिति भिन्नवृत्त एव यतिभ्रष्टस्यान्तर्भावान्न पृथग्ग्रहणं कार्यमत आह—

**न, लक्ष्मणः पृथक्त्वात् ॥ ६ ॥**

नायं दोषः । लक्ष्मणो लक्षणस्य पृथक्त्वात् । अन्यद्धि[1] लक्षणं वृत्तस्य, अन्यद्यतेः । गुरुलघुनियम[2]ात्मकं वृत्तम् । विरामात्मिका च[3] यतिरिति ।

**विरूपपदसंधिर्विसंधिः ॥ ७ ॥**

पदानां संधिः पदसंधिः । स च स्वरसमवायरूपः प्रत्यासत्तिमात्ररूपो वा । स विरूपो यस्मिन्निति विग्रहः ।

**पदसंधिवैरूप्यं विश्लेषोऽश्लीलत्वं कष्टत्वं च ॥ ८ ॥**

विश्लेषो विभागेन पदानां संस्थितिरिति[4] । अश्लीलत्वमसभ्यस्मृतिहेतुत्वम् । कष्टत्वं पारुष्यमिति । विश्लेषो यथा—

'मेघानिलेन अमुना एतस्मिन्नद्रिकानने ।'

'कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः[5] ।'

'लोलालकानुबद्धानि आननानि चकासति ।'

अश्लीलत्वं[6] यथा—

'विरेचकमिदं नृत्तमाचार्याभासयोजितम्[7] ।'

'चकासे पनसप्रायैः पुरी षण्ड[8]महाद्रुमैः ।'

'विना शपथदानाभ्यां पदवादसमुत्सुकम्[9] ।'

कष्टत्वं यथा—'मञ्जर्युद्गमगर्भास्ते गुर्वाभोगा[10] द्रुमा बभुः ।'

---

१. 'विलक्षणं' क-ख. २. 'नियामकं' ख. ३. 'च' ग-पुस्तके नास्ति. ४. 'इति' ग-पुस्तके नास्ति. ५. 'पद्धतिम्' क. ६. 'अश्लीलं च' क, 'अश्लीलं' ग. ७. 'वृत्तमाचार्याभ्यास–' ख. ८. 'खण्ड' क-ग. ९. 'विनाशपथदीनायां यदवादयदुत्सुकम्' क. 'विनाशपथदानायदधारयदुत्सुकम्' ग. १०. 'गुरुभोगा' क.

एवं वाक्यदोषानभिधाय वाक्यार्थदोषान्[1]प्रतिपादयितुमाह—

व्यर्थैकार्थसंदिग्धा[2]प्रयुक्तापक्रमलोकविद्याविरुद्धानि[3] च[4] ॥ ९ ॥

वाक्यानि दुष्टानीति संबन्धः ।

क्रमेण व्याख्यातुमाह—

व्याहतपूर्वोत्तरार्थं[5] व्यर्थम् ॥ १० ॥

व्याहतौ पूर्वोत्तरावर्थौ यस्मिंस्तद्व्याहतपूर्वोत्तरार्थं [6]वाक्यं व्यर्थम् । यथा—'अद्यापि स्मरति [7]रसालसं मनो मे मुग्धायाः स्मरचतुराणि चेष्टितानि ।' [8]मुग्धायाः कथं स्मरचतुराणि चेष्टितानि । तानि चेत्कथं मुग्धा । [9]अत्र पूर्वोत्तरयोरर्थयोर्विरोधाद्व्यर्थमिति ।

उक्तार्थपदमेकार्थम् ॥ ११ ॥

उक्तार्थानि पदानि यस्मिंस्तदुक्तार्थपदमेकार्थम् । यथा—'चिन्तामोहमनङ्गमङ्ग तनुते [10]विप्रेक्षितं सुभ्रुवः ।' अनङ्गः शृङ्गारः । तस्य [11]चिन्तामोहात्मकत्वाच्चिन्तामोहशब्दौ प्रयुक्तावुक्तार्थौ भवतः । एकार्थपदत्वाद्वाक्यमेकार्थमित्युक्तम् ।

न, विशेषश्चेत् ॥ १२ ॥

न गतार्थं [12]दुष्टम् विशेषश्चेत्प्रतिपाद्यः स्यात् ।

तं विशेषं प्रतिपादयितुमाह—

धनुर्ज्याध्वनौ [13]धनुःश्रुतिरारूढेः प्रतिपत्त्यै ॥ १३ ॥

धनुर्ज्याध्वनावित्यत्र ज्याशब्देनोक्तार्थत्वेऽपि धनुःश्रुतिः प्रयुज्यते । आरूढेः प्रतिपत्त्यै आरोहणस्य प्रतिपत्त्यर्थम् । नहि धनुःश्रुतिमन्तरेण धनुष्यारूढा ज्या धनुर्ज्येति शक्यं प्रतिपत्तुम् । यथा—'धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव' इति ।

---

१. 'निरूपयितुं' क. २. 'प्रयुक्तार्थापक्रम' ग. ३. 'विरुद्धाविरुद्धानि' ग. ४. 'च' ख-पुस्तके नास्ति. ५. 'पूर्वोत्तरार्थौ' ख. ६. 'वाक्यं' क-ग-पुस्तकयोर्नास्ति. ७. 'रसोल्लसत्' ख. ८. 'मुग्धा चेत्' ग. ९. 'अत्र' क-ख-पुस्तकयोर्नास्ति. १०. 'विश्लेषितं' ख. ११. 'चिन्तामोहाद्यात्मकत्वात्' क, 'चिन्तामोहात्मकत्वात्' ग. १२. 'दुष्टं पदं' ख. १३. 'धनुःप्रतीतिरारूढे प्रतिपत्तौ' क.

**कर्णावतंसश्रवणकुण्डलशिरःशेखरेषु कर्णादिनिर्देशः संनिधेः १४**

कर्णावतंसादिशब्देषु कर्णादीनामवतंसादिपदैरुक्तार्थानामपि[1] निर्देशः संनिधेः प्रतिपत्त्यर्थमिति संबन्धः । नहि कर्णादिशब्दनिर्देशमन्तरेण कर्णादिसंनिहितानामवतंसादीनां शक्या प्रतिपत्तिः कर्तुमिति[2] । यथा—'दोलाविलासेषु विलासिनीनां—कर्णावतंसाः कलयन्ति कम्पम् ।'

'लीलांचलच्छ्रवणकुण्डलमापतन्ति ।'

'आययुर्भृङ्गमुखरशिरःशेखरशालिनः[3][4] ।'

**मुक्ताहारशब्दे मुक्ताशब्दः शुद्धेः ॥ १५ ॥**

मुक्ताहारशब्दे मुक्ताशब्दो हारशब्देनैव गतार्थः प्रयुज्यते शुद्धेः प्रतिपत्त्यर्थमिति संबन्धः । शुद्धानामन्यरत्नैरमिश्रितानां[5] हारो मुक्ताहारः । यथा—

'प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम्[6] ॥'

**पुष्पमालाशब्दे पुष्पपदमुत्कर्षस्य[7] ॥ १६ ॥**

पुष्पमालाशब्दे मालाशब्देनैव गतार्थं पुष्पपदं प्रयुज्यते उत्कर्षस्य प्रतिपत्त्यर्थमिति । उत्कृष्टानां पुष्पाणां माला पुष्पमालेति । यथा—'प्रायशः पुष्पमालेव कन्या[8] सा कं न लोभयेत् ।' ननु मालाशब्दोऽन्यत्रापि दृश्यते यथा रत्नमाला शब्दमालेति सत्यम् । उपचरितस्य प्रयोगः । निरुपपदो हि मालाशब्दः पुष्पपरचना[9]विशेषमेवा[10]भिधत्त इति ।

**करिकलभशब्दे करिशब्दस्ताद्रूप्यस्य[11] ॥ १७ ॥**

करिकलभशब्दे करिशब्दः कलभेनैव गतार्थः प्रयुज्यते ताद्रूप्यस्य

---

१. 'अपि' ख-ग-पुस्तकयोर्नास्ति. २. 'कर्तुमिति' ख-ग-पुस्तकयोर्नास्ति. ३. 'मुखराः' ख-ग. ४. 'शायिनः' ग. ५. 'अमिश्राणां' क. ६. 'स्तनद्वयी' क. ७. 'पुष्पशब्दः' क. ८. 'कन्यका कं' ख-ग. ९. 'पुष्पमालारचना' ख. १० 'एव' ख-ग-पुस्तकयोर्नास्ति. ११. 'ताद्रूप्यस्य प्रतिपत्त्यर्थम्' ख.

प्रतिपत्त्यर्थमिति । करी प्रौढकुञ्जरः । तद्रूपः कलभः करिकलभ इति[1] यथा—'त्यज करिकलभ त्वं प्रीतिबन्धं करिण्याः ।'

**विशेषणस्य च ॥ १८ ॥**

विशेषणस्य विशेषप्रतिपत्त्यर्थमुक्तार्थस्य पदस्य[3] प्रयोगः । यथा—'जगाद मधुरां वाचं विशदाक्षरशालिनीम्[4] ।'

**तदिदं प्रयुक्तेषु ॥ १९ ॥**

तदिदमुक्तं प्रयुक्तेषु नाप्रयुक्तेषु । नहि भवति यथा 'श्रवणकुण्डलम्' इति तथा 'नितम्बकाञ्ची' इत्यपि । यथा वा[5] 'करिकलभः' इति तथा 'उष्ट्रकलभः' इत्यपि ।

अत्र श्लोकः—

> 'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
> संनिधानादिबोधार्थं स्थितेष्वेतत्समर्थनम् ॥'

**संशयकृत्संदिग्धम् ॥ २० ॥**

यद्वाक्यं साधारणानां धर्माणां श्रुतेः, विशिष्टानां वा[6] श्रुतेः संशयं करोति तत्संशयकृत्संदिग्धमिति[7] । A high rank in a trouble

यथा—'स महात्मा भाग्यवशान्महापदमुपागतः ।'

किं भाग्यवशान्महापदमुपागत आहोस्विदभाग्यवशान्महतीमापदमिति[8] संशयकृद्वाक्यं प्रकरणाद्यभावे सतीति[9] ।

**मायादिकल्पितार्थमप्रयुक्तम् ॥ २१ ॥**

मायादिना कल्पितोऽर्थो यस्मिंस्तन्मायादिकल्पितार्थमप्रयुक्तम् । अत्र स्तोकमुदाहरणम्[10] । Quote here the 10th shloka from Canto I of Śiśupalvadha.

**क्रमहीनार्थमपक्रमम् ॥ २२ ॥**

---

१. 'करिणः प्रौढकुञ्जराः' क. २. 'इति' क-पुस्तके नास्ति. ३. 'शब्दस्य' क. ४. 'मालिनीम्' क. ५. 'वा' ख पुस्तके नास्ति. ६. 'चाश्रुते' क. 'च श्रुतेः' ग. ७. 'इति' ख-पुस्तके नास्ति. ८. 'आपदमुपागत इति' क. ९. 'इति' ग-पुस्तके नास्ति. १०. 'अस्तोकं' क. 'श्लोकं' ग.

[1]उद्देशितानामनुद्देशितानां च क्रमः संबन्धस्तेन विहीनो[2]ऽर्थो यस्मिंस्तत्क्रमहीनार्थमपक्रमम् ।

यथा—'कीर्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ ।'

[3]अत्र कीर्तिश्चन्द्रमसस्तुल्या प्रतापः सूर्यस्य तुल्यः । सूर्यस्य पूर्वनिपातादपक्रमः । अथवा प्रधानार्थस्य निर्देशः क्रमः । तेन विहीनोऽर्थो यस्मिंस्तदपक्रमम् ।

यथा—'तुरंगमथ मातङ्गं [4]प्रयच्छास्मै मदालसम् ।'

**देशकालस्वभावविरुद्धार्थानि लोकविरुद्धानि ॥ २३ ॥**

देशकालस्वभावैर्विरुद्धोऽर्थो येषु तानि देशकालस्वभावविरुद्धार्थानि वाक्यानि लोकविरुद्धानि । अर्थद्वारेण लोकविरुद्धत्वं वाक्यानाम् । देशविरुद्धं यथा—

'सौवीरेष्वस्ति नगरी मथुरा नाम विश्रुता ।
अक्षोटनालिकेराढ्या यस्याः पर्यन्तभूमयः ॥'

कालविरुद्धं यथा—'कदम्बकुसुमस्मेरं मधौ वनमशोभत ।'

स्वभावविरुद्धं यथा—'मत्तालिसङ्गमुखरासु च मञ्जरीषु सप्तच्छदस्य तरतीव शरन्मुखश्रीः ।'

सप्तच्छदस्य स्तवका भवन्ति न मञ्जर्य इति स्वभावविरुद्धम् ।

तथा—

'भृङ्गेण कलिकाकोषस्तथा भृशमपीड्यत ।
यथा गोष्पदपूरं हि ववर्ष बहुलं मधु ॥'

कलिकायाः सर्वस्या मकरन्दस्यैतावद्बाहुल्यं स्वभावविरुद्धम् ।

---

१. 'उद्देशिनामनुद्देशिनां' क. २. 'हीनो' क. ३. 'अत्र' इत्यारभ्य 'अपक्रमः' इतिपर्यन्तं क-पुस्तके, 'अत्र' इत्यारभ्य 'यथा' इतिपर्यन्तं च ग-पुस्तके नास्ति. ४. 'मे प्रयच्छ' ग. ५. 'विरुद्धार्थत्वं' क. ६. 'नालिकेराङ्का' क, 'नालिकेराद्या' ख. ७. 'विरुद्धार्थं' क. ८. 'विरुद्धार्थं' क. ९. 'इति स्वभावविरोधः । यथा' क, 'इति । स्वभावविरुद्धं यथा ।' ख. १०. 'संधावपीड्यत' क. ११. 'कलिकाकोषस्य मकरन्दस्यैव तावत्' क.

कलाचतुर्वर्गशास्त्रविरुद्धार्थानि वि[1]द्याविरुद्धानि ॥ २४ ॥

कलाशास्त्रैश्चतुर्वर्गशास्त्रैश्च विरु[2]द्धोऽर्थो येषु तानि क[3]लाचतुर्वर्गशास्त्रवि[4]रुद्धार्थानि वाक्यानि विद्याविरुद्धानि । वाक्यानां विरोधोऽर्थद्वारकः ।

कलाशास्त्रविरुद्धं यथा—'कालिङ्गं लिखितमिदं व[5]यस्य पत्रं पत्रज्ञैरपतितकोटि[6]कण्टकाग्रम् ।'

कालिङ्गं पतिताग्र[7]कोटिकण्टकमिति पत्रविदामाम्नायः । त[8]द्विरुद्धत्वात्कलाशास्त्रवि[9]रुद्धम् । एवं कलान्तरेष्वपि विरोधोऽभ्यू[10]ह्यः ।

चतुर्वर्गशास्त्रविरुद्धानि तू[11]दाह्रियन्ते—'कामोपभोगसाफल्यफलो राज्ञां महीजयः ।'

धर्मफलोऽश्वमेधादियज्ञफलो वा राज्ञां महीजय इत्यागमः । तद्विरोधाद्धर्मशास्त्रवि[12]रुद्धार्थमेतद्वाक्यमिति ।

'अहंकारेण जीयन्ते द्विषन्तः किं नयश्रिया ।'

द्विषज्जयस्य नयमूलत्वं स्थितं दण्डनीतौ । तद्विरोधादर्थशास्त्रवि[13]रुद्धार्थं वा[14]क्यमिति ।

'दशनाङ्कपवित्रितोत्तरोष्ठं रतिखेदालसमाननं स्मरामि ।'

'उत्तरौष्ठमन्तर्मुखं नयनान्तमिति'[15] मुक्त्वा चुम्बननखरदशनस्थानानि' इति का[16]मशास्त्रे स्थितम् । तद्विरोधात्कामशास्त्रविरुद्धार्थं वाक्यमिति ।

'देव[17]ताभक्तितो मुक्तिर्न तत्त्वज्ञानसंपदा ।'

एतस्यार्थस्य मोक्षशास्त्रे स्थितत्वात्तद्विरुद्धार्थम् ।

---

१. 'विरुद्धानि' ख. २. 'विरुद्धार्थो' ख. ३. 'कलाविरुद्धचतुर्वर्ग' ख. ४. विरुद्धानि विद्या—' ख. ५. 'च यस्य' ख. ६. 'कण्टकग्रि' क. ७. 'कोटि' क-पुस्तके नास्ति. ८. 'तद्विरोधात्' क. ९. 'विरुद्धलम्' क. १० 'अत्यूह्य' ख. 'अभ्युपेयः' ग. ११. 'तु' क-पुस्तके नास्ति. १२. 'विरुद्धमेतद्वाक्यम्' क, 'विरुद्धं वाक्यम्' ग. १३. 'विरुद्धलम्' क, 'विरुद्धम्' ग. १४. 'वाक्यमिति' क-ग-पुस्तकयोर्नास्ति. १५. 'इति' ग-पुस्तके नास्ति. १६. 'कामशास्त्रसूत्रे' ख. १७. 'देवताज्ञानतो' ख.

एते वाक्यवाक्यार्थदोषास्त्यागाय ज्ञातव्याः । ये[1] त्वन्ये[2] शब्दार्थदोषाः सूक्ष्मास्ते गुणविवेचन एवोच्यन्ते[3] । उपमादोषाश्चोपमाविचार[4] इति[5] ।

इति काव्यालंकारसूत्रवृत्तौ दोषदर्शने द्वितीयेऽधिकरणे द्वितीयोऽध्यायः ।

वाक्यवाक्यार्थदोषविभागः[6] ।

समाप्तं चेदं दोषदर्शनं द्वितीयमधिकरणम् ।

---

## गुणविवेचनं[7] नाम तृतीयमधिकरणम् ।

### प्रथमोऽध्यायः ।

यद्विपर्ययात्मानो दोषास्तान्गुणान्विचारयितुं गुणविवेचनमधिकरणमारभ्यते—

तत्रौजःप्रसादादयो गुणाः, यमकोपमादयस्त्वलंकारा इति स्थितिः काव्यविदाम् । तेषां किं भेदनिबन्धनमित्याह—

**काव्यशोभाया कर्तारो धर्मा गुणाः[8] ॥ १ ॥**

ये खलु शब्दार्थयोर्धर्माः[9] काव्यशोभां कुर्वन्ति ते गुणाः । ते चौजःप्रसादादयः । न यमकोपमादयः । कैवल्येन तेषामकाव्यशोभाकरत्वात् । ओजः प्रसादादीनां तु केवलानामस्ति[10] काव्यशोभाकरत्वमिति[11] ।

**तदतिशयहेतवस्त्वलंकाराः ॥ २ ॥**

तस्याः काव्यशोभाया अतिशयस्तदतिशयस्तस्य[12] हेतवः । तुशब्दो व्यतिरेके । अलंकाराश्च यमकोपमादयः ।

अत्र श्लोकौ—

'युवतेरिव रूपमङ्ग काव्यं[13] स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलंकारविकल्पकल्पनाभिः ॥
'यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलंकरणानि संश्रयन्ते ॥'

---

१. 'अन्ये च ये' ग. २. 'शब्दार्थयोः' क. ३. 'वक्ष्यन्ते' ख. ४. 'च' ख-पुस्तके नास्ति. ५. 'इति' ख-पुस्तके नास्ति. ६. 'वाक्यशब्दार्थदोष' क. ७. 'विवेचनाधिकरणं' क. ८. 'धर्मगुणाः' ख. ९. 'शब्दार्थधर्माः' क. १०. 'अस्ति' ख-पुस्तके नास्ति. ११. 'कारित्वं' ग. १२. 'तदतिशयः' क-पुस्तके नास्ति. १३. 'वाक्यं' क.

**पूर्वे नित्याः ॥ ३ ॥**

पूर्वे[1] गुणा नित्याः । तैर्विना काव्यशोभानुपपत्तेः ।

एवं गुणालंकाराणां भेदं दर्शयित्वा शब्दगुणनिरूपणार्थमाह—

**ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्ति-कान्तयो बन्धगुणाः ॥ ४ ॥**

बन्धः पदरचना । तस्य गुणा बन्धगुणा ओजःप्रभृतयः ।

तान्क्रमेण दर्शयितुमाह—

**गाढबन्धत्वमोजः ॥ ५ ॥**

बन्धस्य गाढत्वं यत्तदोजः ।

यथा—'विलुलितमकरन्दा मञ्जरीर्नर्तयन्ति[2] ।' न पुनः, 'विलुलितम[3]धुधारा मञ्जरीर्लोलयन्ति ।'

**शैथिल्यं प्रसादः[4] ॥ ६ ॥**

बन्धस्य शैथिल्यं शिथिलत्वं प्रसादः ।

नन्वयमोजोविपर्ययात्मा दोषः, तत्कथं गुण इत्याह—

**गुणः संप्लवात् ॥ ७ ॥**

गुणः प्रसादः ओजसा सह संप्लवात् ।

**न[5] शुद्धः ॥ ८ ॥**

स[6] शुद्धस्तु दोष एवेति ।

ननु विरुद्धयोरोजःप्रसादयोः कथं संप्लव इत्याह—

**स त्वनुभवसिद्धः ॥ ९ ॥**

स तु संप्लवस्त्वनुभवसिद्धः तद्विदां रत्नादिविशेषवत् ।

अत्र श्लोकः—

> '[7]करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः ।
> यथानुभवतः सिद्धस्तथैवोजःप्रसादयोः ॥'

---

१. 'पूर्वे खलु' ख. 'पूर्वे ते' ग. २. 'नर्तयन्तः' क. ३. 'मधुधारां मञ्जरीं' ग. ४. 'प्रसादः' ख-पुस्तके नास्ति. ५. एतत्सूत्रं ख-पुस्तके वृत्तिमध्ये न्यस्तम्, क-पुस्तके च त्रुटितम्. ६. 'संशुद्धस्तु' क, 'शुद्धस्तु' ग. ७. 'करुणा' ख.

**साम्योत्कर्षौ च ॥ १० ॥**

साम्यमुत्कर्षश्चौजःप्रसादयोरेव ।

साम्यं यथा—'अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।'

क्वचिदोजः प्रसादादुत्कृष्टम् । [१]यथा—'व्रजति गगनं भल्लातक्याः फलेन सहोपमाम् ।'

क्वचिदोजसः प्रसादस्योत्कर्षः । [२]यथा—'कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः ।'

**मसृणत्वं श्लेषः ॥ ११ ॥**

मसृणत्वं नाम यस्मिन्सति बहून्यपि पदान्येकवद्भासन्ते । यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।' न पुनः, 'सूत्रं ब्राह्ममुरःस्थले—', 'भ्रमरीवल्गुगीतयः', 'तडित्कलिलमाकाशं' इति । एवं तु श्लेषो भवति—'ब्राह्मं सूत्रमुरःस्थले', 'भ्रमरीमञ्जुगीतयः', 'तडिज्जटिलमाकाशं' इति ।

**मार्गाभेदः समता ॥ १२ ॥**

मार्गस्याभेदो [३]मार्गाभेदः समता । येन मार्गेणोपक्रमस्तस्यात्याग इत्यर्थः । श्लोके प्रबन्धे चेति । पूर्वोक्तमुदाहरणम् । विपर्ययस्तु यथा—

'प्रसीद चण्डि त्यज मन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः ।
किमर्थमुत्कम्पितपीवरस्तनद्वयं त्वया लुप्तविलासमास्यते ॥'

**आरोहावरोहक्रमः समाधिः ॥ १३ ॥**

आरोहावरोहयोः क्रम आरोहावरोहक्रमः समाधिः परिहारः । आरोहस्यावरोहे सति परिहारः, अवरोहस्य वारोहे सतीति । तत्रारोहपूर्वोऽवरोहो यथा—'निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे ।' अवरोहपूर्वस्त्वारोहो यथा—'नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः ।'

१. 'यथा' क-ग-पुस्तकयोर्नास्ति. २. 'यथा' ख-ग-पुस्तकयोर्नास्ति. ३. 'मार्गाभेदः' ख-पुस्तके नास्ति. ४. 'तथायं' क. ५. 'आरोहावरोहयोः क्रमः' ख. ६. 'पूर्वको' ख.

आरोहस्य[1] क्रमोऽवरोहस्य च क्रम आरोहावरोहक्रमः क्रमेणारोहणमवरोहणं चेति केचित् ।

यथा—'निवेशः स्वःसिन्धोस्तुहिनगिरिवीथीषु जयति ।'

**न पृथक्, आरोहावरोहयोरोजःप्रसादरूपत्वात् ॥ १४ ॥**

न पृथक्समाधिर्गुणः । आरोहावरोहयोरोजःप्रसादरूपत्वात् । ओजोरूपश्चा[2]रोहः प्रसादरूपश्चा[3]वरोह इति ।

**न, संपृक्तत्वात् ॥ १५ ॥**

यदुक्तमोजःप्रसादरूपत्वमारोहावरोहयोस्तन्न । संपृक्तत्वात् । संपृक्तौ खल्वोजःप्रसादौ नदीवेणिकावद्वहतः ।

**(२) अनैकान्त्याच्च ॥ १६ ॥**

न चायमेकान्तः यदोजस्यारोहः, प्रसादे चा[5]वरोह इति ।

**[6]ओजःप्रसादयोः क्वचिद्भागे तीव्रावस्थायां ताविति चेदभ्युपगमः ॥ १७ ॥**

ओजःप्रसादयोः क्वचिद्भागे तीव्रावस्थायामारोहोऽवरोहश्चेत्येवं चेन्मन्यसे अभ्युपगमः, न विप्रतिपत्तिः ।

**विशेषापेक्षत्वात्तयोः ॥ १८ ॥**

स विशेषो गुणान्तरात्मा ।

**आरोहावरोहनिमित्तं समाधिराख्यायते ॥ १९ ॥**

आरोहावरोहक्रमः समाधिरिति गौण्या वृत्त्या व्याख्येयम् । गौणवृत्त्या

**क्रमविधानार्थत्वाद्वा ॥ २० ॥**

पृथक्करणमिति । पाठधर्मत्वं च न संभवतीति 'न पाठधर्मः सर्वत्रादृष्टेः' इत्यत्र वक्ष्यामः ।

**पृथक्पदत्वं माधुर्यम् ॥ २१ ॥**

---

१. 'आरोहस्य च' ख. २. 'च' ग-पुस्तके नास्ति. ३. 'तु' ग. ४. 'नदीवेणिकासंगमसमुद्वहनः' ग. ५. 'वा' क-ग. ६. 'ओजःप्रसादयोस्तीव्रावस्थासाविति' ख. ७. 'इत्याख्यायते' क. ८. क-ग-पुस्तकयोः 'क्रमविधानार्थत्वाद्वा' इति वृत्तिमध्य एव निक्षिप्तम्. ९. 'इत्येवं' ख-ग.

बन्धस्य पृथक्पदत्वं यत्तन्माधुर्यम् । पृथक् पदानि यस्य स पृथक्पदः तस्य भावः पृथक्पदत्वम् । समासदैर्घ्यविनिवृत्तिपरं चैतत् । पूर्वोक्तमुदाहरणम् ।

विपर्ययस्तु यथा—'चलितशबरसेनादत्तगोशृङ्गचण्डध्वनिचकितवराहव्याकुला विन्ध्यपादाः ।'

**अजरठत्वं सौकुमार्यम् ॥ २२ ॥**

बन्धस्याजरठत्वमपारुष्यं[1] यत्तत्सौकुमार्यम् । पूर्वोक्तमुदाहरणम् ।

विपर्ययस्तु यथा—'निदानं निर्द्वैतं प्रियजनसदृक्त्वव्यवसितिः[2] सुधासेकप्लोषौ[3] फलमपि विरुद्धं मम हृदि ।'

**विकटत्वमुदारता ॥ २३ ॥**

बन्धस्य विकटत्वं यदसावुदारता[4] । यस्मिन्सति नृत्यन्तीव पदानीति[5] जनस्य वर्णना[6] भवति तद्विकटत्वम्[7] । लीलायमानत्वमित्यर्थः । यथा—'स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झटिति[8] रणितमासीत्तत्र चित्रं कलं च ।' न पुनः, 'चरणकमललग्नैर्नूपुरैर्नर्तकीनां[9] झटिति रणितमासीन्मञ्जु चित्रं च तत्र ।'

**अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः ॥ २४ ॥**

यत्र झटित्यर्थप्रतिपत्तिहेतुत्वं[10] स गुणोऽर्थव्यक्तिरिति । पूर्वोक्तमुदाहरणम्[11] । प्रत्युदाहरणं तु[12] भूयः सुलभं च ।

**औज्ज्वल्यं कान्तिः ॥ २५ ॥**

बन्धस्योज्ज्वलत्वं नाम यदसौ कान्तिरिति । यदभावे पुराणच्छाये[13]त्युच्यते ।

यथा—'कुरङ्गीनेत्रालीस्तबकितबनालीपरिसरः ।' विपर्ययस्तु भूयान्सुलभश्च[14] ।

१. 'अपरुषत्वं' क. २. 'पृथक्त्वव्यवसितं सुधासेकाप्लावौ' क. ३. 'प्लोषैः' ख. ४. 'यत्सा' क. 'यदेषा' ग. ५. 'इति' ख-पुस्तके नास्ति. ६. 'वर्णभावना' ख. ७. 'तद्धि विकटत्वम्' क. ८. 'झणिति' क, 'झगिति' ग. ९. 'युक्तैः' ख. १०. 'झगिति' क-ग. ११. 'झगिति' क-ग.. १२. 'च भूयः सुलभं' ख. १३. 'पुराणी' क. १४. 'च' क.

श्लोकाश्चात्र भवन्ति—

'पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः।
अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम्॥
श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते।
अनेन न विना सत्यं स्वदते [1]काव्यपद्धतिः॥
यत्रैकपदवद्भावः पदानां भूयसामपि।
अनालक्षितसंधीनां स श्लेषः परमो गुणः॥
प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः॥
आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत्।
समाधिर्नाम स गुणस्तेन पूता सरस्वती॥
बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः।
अनेन हि पद[2]न्यासाः कामं धारा[3]मधुश्चुतः॥
यथा हि[4] च्छिद्यते रेखा चतुरं चित्रपण्डितैः।
तथैव वागपि प्राज्ञैः समस्त[5]गुणगुम्फिता॥'
बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम्।
एतेन वर्जिता वाचो [6]रूक्षत्वान्न श्रुतिक्षमाः
विकटत्वं च[7] बन्धस्य कथयन्ति ह्युदारताम्।
वैचित्र्यं न प्रपद्यन्ते [8]यया शून्याः पदक्रमाः॥
पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः।
यत्रार्थव्यक्तिहेतुत्वात्सोऽर्थव्यक्तिः स्मृतो गुणः॥
औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुण[9]विशारदाः।
पुराणचित्रस्थानीयं तेन वन्ध्यं कवेर्वचः।

**नासन्तः सद्वेद्यत्वात्॥ २६॥**

---

१. 'पदपद्धतिः' क. २. 'न्यासः' ख. ३. 'मधुच्युताः' क. ४. 'विच्छिद्यते' क. ५. 'पदविप्लुता' क. ६. 'रौक्षत्वान्न श्रुतिक्षमाः' क. ७. 'च' ख-पुस्तके नास्ति. ८. 'यथा' ख. ९. विपश्चितः' क.

न खल्वेते गुणा असन्तः । संवेद्यत्वात्[1] ।

तद्विदां संवेद्यत्वेऽपि[2] भ्रान्ताः स्युरित्याह—

**न[3] भ्रान्ताः, निष्कम्पत्वात् ॥ २७ ॥**

न गुणा भ्रान्ताः । एतद्विषयायाः प्रवृत्तेर्निष्कम्पत्वात्[4] ।

**न पाठधर्माः, सर्वत्रादृष्टेः ॥ २८ ॥**

नैते गुणाः पाठधर्माः । सर्वत्रादृष्टेः । यदि पाठधर्माः स्युस्तर्हि[5] विशेषानपेक्षाः सन्तः सर्वत्र दृश्येरन् । न च सर्वत्र दृश्यन्ते । विशेषापेक्षया विशेषाणां गुणत्वाद्गुणाभ्युपगम एवेति ।

इति काव्यालंकारसूत्रवृत्तौ गुणविवेचने तृतीयेऽधिकरणे प्रथमोऽध्यायः ।
गुणालंकारविवेकः शब्दगुणविवेकश्च ।

---

द्वितीयोऽध्यायः ।

संप्रत्यर्थगुणविवेचनार्थमाह[6]—

**त एवार्थगुणाः ॥ १ ॥**

त एवौजःप्रभृतयो[7]ऽर्थगुणाः ।

शब्दार्थगुणानां वाच्यवाचकद्वारेण भेदं दर्शयति—

**अर्थस्य प्रौढिरोजः ॥ २ ॥**

अर्थस्याभिधेयस्य प्रौढिः[8] प्रौढत्वमोजः ।

'पदार्थे वाक्यवचनं[9] वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥'

पदार्थे वाक्यवचनं[10] यथा—'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।' अत्र चन्द्रपदवाच्येऽर्थे 'नयनसमुत्थं ज्योतिरत्रेः' इति वाक्यं प्रयुक्तम् । पदसमूहश्च वाक्यमभिप्रेतम् । अनया दिशान्यदपि द्रष्टव्यम् ।

---

१. 'संवेद्यत्वात्' क. २. 'संवेद्यत्वे' क. ३. 'निर्भ्रान्ताः' क-ख. ४. 'निष्कम्पत्वात्' ग. ५. 'तर्हि' क-ग-पुस्तकयोर्नास्ति. ६. 'विवेचनं' क. ७. 'एवौजःप्रसाद' ख. ८. 'प्रौढत्वं यत्तदोजः' ग. ९. 'रचनं' ख. १०. 'रचनं' ख.

तद्यथा—

'पुरः पाण्डुच्छायं[1] तदनु कपिलिम्ना कृतपदं
ततः पाकोत्सेकादरुणगुणसंसर्गितवपुः[2] ।
शनैः शोषारम्भे[3] स्थपुटनिजविष्कम्भविषमं
वने वीतामोदं[4] बदरमरसत्वं कलयति ॥'

न चैवमतिप्रसङ्गः[5] । काव्यशोभाकरत्वस्य गुणसामान्यलक्षणस्याव[6]-स्थितत्वात् ।

वाक्यार्थे पदाभिधानं यथा—'दिव्येयं न भवति किं तु मानुषी' इति वक्तव्ये 'निमिषति' इत्याहेति ।

अस्य[7] वाक्यार्थस्य व्याससमासौ । व्यासो यथा—

'अयं नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा भवति[8] न भवत्येव च ततः ।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि त-
त्पुनस्तस्मादूर्ध्वं भवति न[9] च दुःखं न च सुखम् ।

समासो यथा—

'ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥'

साभिप्रायत्वं यथा—'सोऽयं संप्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः ।' आश्रयः कृतधियामित्यस्य च[10] सुबन्धुसाचिव्योपक्षेपपरत्वात्साभि-[11]प्रायत्वम् ।

एतेन, 'रतिविगलितबन्धे केशपाशे सुकेश्याः' इत्यत्र सुकेश्या[12] इत्यस्य[13] च साभिप्रायत्वं व्याख्यातम् ।

---

१. 'प्रायं' क. २. 'पाकोत्सेधादरुणमणि' ख. ३. 'शेषारम्भे' ख. ४ 'वीजामोदं' ख. ५ 'न चाति' ग. ६. 'सामान्यस्य' ख. ७. 'अस्यैव' क. ८. 'न भवति भवत्वेव' ख. ९. 'नहि' ख. १०. 'वसुबन्धु' क-ख. ११. 'उपलक्षणत्वात्' ग. १२. 'इत्यत्र सुकेश्या' क-ग-पुस्तकयोर्नास्ति. १३ 'इत्यस्यापि' क.

**अर्थवैमल्यं प्रसादः ॥ ३ ॥**

[1]अर्थस्य वैमल्यं प्रयोजकमात्रपरिग्रहः प्रसादः ।

यथा—'सवर्णा कन्यका रू[2]पयौवनारम्भशालिनी ।'

विपर्ययस्तु—'उ[3]पास्तां हस्तौ मे विमलमणिकाञ्चीपदमिदम् ।'

काञ्चीपदमित्यनेनैव नितम्बस्य लक्षितत्वाद्विशेषणस्याप्रयोजकत्वमिति ।

**घटना श्लेषः ॥ ४ ॥**

क्रमकौटिल्यानुल्बणत्वोपपत्तियोगो घटना । स श्लेषः ।

यथा—

'दृष्ट्वैकासनसंग[4]ते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकंधरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽ[5]परां चुम्बति ॥'

शूद्रकादिरचितेषु प्रबन्धेष्वस्य भूयान्प्र[6]पञ्चो दृश्यते ।

**अवैषम्यं समता ॥ ५ ॥**

अवैषम्यं प्रक्रमाभेदः समता । क्वचित्क्रमोऽपि भिद्यते । यथा—

'च्युतसुमनसः कुन्दाः पुष्पोद्गमे[7]ष्वलसा द्रुमा
मलयमरुतः सर्पन्तीमे वियुक्तधृतिच्छिदः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न[8] च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥'

ऋतुसंधिप्रतिपादनपरेऽत्र द्वितीये पादे क्र[9]मभेदो मलयमरुतामसाधारणत्वात् । एवं तु[10] द्वितीयः पादः पठितव्यः । 'मनसि च गिरं बध्नन्तीमे किरन्ति न कोकिलाः' इति ।

**सुगमत्वं वावैषम्यमिति ॥ ६ ॥**

सुखेन गम्यते ज्ञायत इत्यर्थः ।

---

१. 'अर्थवैमल्यं' क-ग. २. 'रूपशीलयौवनशालिनी' ग. ३. 'उपास्ते' ख. ४. 'संस्थिते' ख-ग. ५. 'परां' क. ६. 'प्रयोगः' ग. ७. 'अलसद्रुमा' ख. ८. 'नवजरठबन्तं' ग. ८. 'सुम' ख. १०. 'तु' ख-पुस्तके नास्ति.

यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा' इत्यादि[1]। प्रत्युदाहरणं सुलभम्।

**अर्थदृष्टिः समाधिः ॥ ७ ॥**

अर्थस्य दर्शनं दृष्टिः । समाधानकारणत्वात्[2]समाधिः । अवहितं हि चित्तमर्थान्पश्यतीत्युक्तं पुरस्तात्[3] ।

**अर्थो द्विविधः, अयोनिरन्यच्छायायोनिर्वा ॥ ८ ॥**

यस्यार्थस्य दर्शनं समाधिः सोऽर्थो द्विविधः—अयोनिः, अन्यच्छायायोनिर्वेति । अयोनिरनन्यकारणः[4] । अवधानमात्रकारण इत्यर्थः । अन्यस्य काव्यस्य च्छाया अन्यच्छाया तद्योनिर्वा[5] । तद्यथा—

'आश्वपेहि मम सीधुभाजनाद्यावदग्रदशनैर्न[6] दश्यसे ।
चन्द्र मद्दशनमण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात् ॥'

'मा भैः शशाङ्क मम सीधुनि नास्ति राहुः
खे रोहिणी वसति कातर किं बिभेषि ।
प्रायो विदग्धवनितानवसंगमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥'

पूर्वस्य श्लोकस्यार्थोऽयोनिः, द्वितीयस्य च च्छायायोनिरिति[7] ।

**अर्थो व्यक्तः सूक्ष्मश्च ॥ ९ ॥**

यस्यार्थस्य दर्शनं समाधिरिति स द्वेधा[8]—व्यक्तः सूक्ष्मश्च । व्यक्तः स्फुट[9] उदाहृत एव । सूक्ष्मं व्याख्यातुमाह—

**सूक्ष्मो भाव्यो वासनीयश्च ॥ १० ॥**

सूक्ष्मो द्वेधा भवति—भाव्यो वासनीयश्च । [10]शीघ्रनिरूपणागम्यो भाव्यः । एकाग्रताप्रकर्षगम्यो वासनीय [11]इति । [12]भाव्यो यथा—

'अन्योन्यसंमिलित[13]मांसलदन्तकान्ति
सोल्लासमाविरलसंवलितार्धतारम् ।

---

१. 'इति' ख. अस्मादनन्तरं ख-पुस्तके 'केयमवगुण्ठनवती—' इत्यादि शाकुन्तलपञ्चमाङ्कस्थं पद्यं कोष्ठकान्तर्लिखितमस्ति. २. 'समाधिकारण' क-ग. ३. 'प्राक्' ग. ४. 'अनल्प' ग. ५. 'तदयोनिर्वा' ख. ६. 'यद्दशन' ख. ७. 'इत्यर्थः' क. ८. 'द्विधा' ख. ९. 'स्फुटं' क. १०. 'सूक्ष्म ग. ११. 'इति' क-ग-पुस्तकयोर्नास्ति. १२. 'तत्र भाव्यो' क. १३. 'संवलित' ख.

लीलागृहे प्रतिकलं किलकिञ्चितेषु
व्यावर्तमानविनयं मिथुनं चकास्ति ॥'

वासनीयो यथा—

'अवहित्थवलितजघनं विवर्तिताभिमुखकुचतटं स्थित्वा ।
अवलोकितोऽहमनया दक्षिणकरकलितहारलतम् ॥'

उक्तिवैचित्र्यं माधुर्यम् ॥ ११ ॥

उक्तेर्वैचित्र्यं यत्तन्माधुर्यमिति । यथा—

'रसवदमृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्ञनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥'

अपारुष्यं सौकुमार्यम् ॥ १२ ॥

परुषेऽर्थेऽपारुष्यं सौकुमार्यमिति ।
यथा मृतं यशःशेष इत्याहुः । एकाकिनं देवताद्वितीयमिति । गच्छेति साधयेति च ।

अग्राम्यत्वमुदारता ॥ १३ ॥

ग्राम्यत्वप्रसङ्गेऽग्राम्यत्वमुदारता । यथा—

'त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वा-
मतः शेषं चेत्स्याजितमिह तदानीं गुणितया ॥'

विपर्ययस्तु—

'स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।
इति निगद्य शनैरनुमेखलं मम करं स्वकरेण रुरोध सा ॥'

---

१. 'प्रविरले' ख, 'प्रविकलं' क. २. 'किलकिञ्चितेन' ग. ३. 'उक्तेऽर्थे वैचित्र्यं तेन' क. ४. 'सरसममृतं' ख. ५. 'अमृतं यशःशेषमित्याहुः' ख. ६. 'सीमान्तं' क. ७. 'तुदति' ग. ८. 'सुभगत्वं वदति' ख. ९. 'अथ' क.

वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ॥ १४ ॥

वस्तूनां भावानां स्वभावस्य स्फुटत्वं यदसावर्थव्यक्तिः । यथा—

'पृष्ठेषु शङ्खशकलच्छविषु च्छदानां
राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रुबहिःपलाश-
मामोदते कुमुदमम्भसि पल्वलस्य ॥'

यथा वा—

'प्रथममलसैः पर्यस्ताग्रैः स्थितं पृथुकेसरै-
र्विरलविरलैरन्तःपत्रैर्मनाङ्मिलितं ततः ।
तदनु वलनामात्रं किंचिद्व्यधायि बहिर्दलै-
र्मुकुलनविधौ वृद्धाब्जानां बभूव कदर्थना ॥'

दीप्तरसत्वं कान्तिः ॥ १५ ॥

दीप्ता रसाः शृङ्गारादयो यस्य स दीप्तरसः, तस्य भावो दीप्तरसत्वं कान्तिः । यथा—

'प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रच्युतपाणिसंपुटलसन्नीवीनितम्बं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥'

एवं रसान्तरेष्वप्युदाहरणीयमिति ।

अत्र श्लोकाः—

'गुणस्फुटत्वसाकल्यं काव्यपाकं प्रचक्षते ।
चूतस्य परिणामेन स चायमुपमीयते ॥
सुप्तिङ्संस्कारमात्रं यत्क्लिष्टवस्तुगुणं भवेत् ।
काव्यं वृन्ताकपाकं तज्जुगुप्सन्ते जनास्ततः ॥

१. 'सकल' ख. २. 'पर्यस्तांग्रस्थितं' क. ३. 'कृतप्रणाममहहा' क. ४. 'रसान्तरे' ख, 'रसान्तरं' ग. ५. 'उदाहार्यम्' ग. ६. 'उपनीयते' क, 'परिमीयते' ग. ७. 'क्लिष्टं' ख.

गुणानां दर्शनान्मुक्तो यस्यार्थस्तदपार्थकम् ।[1]
दाडिमानि दशेत्यादि न विचारक्षमं वचः ॥'[2]

इति काव्यालंकारसूत्रवृत्तौ गुणविवेचने तृतीयेऽधिकरणे द्वितीयोऽध्यायः ।
अर्थगुणविवेचनम्[3] ।

समाप्तं चेदं गुणविवेचनं तृतीयमधिकरणम् ।

---

## आलंकारिकं नाम चतुर्थमधिकरणम् ।

### प्रथमोऽध्यायः ।

गुणनिर्वृत्त्या[4] काव्यशोभा । तस्याश्चातिशयहेतवोऽलंकाराः । तन्निरूपणार्थमालंकारिकमधिकरणमारभ्यते—

तत्र शब्दालंकारौ द्वौ यमकानुप्रासौ क्रमेण दर्शयितुमाह[5]—

**पदमनेकार्थमक्षरं वावृत्तं[6] स्थाननियमे यमकम् ॥ १ ॥**

पदमनेकार्थं भिन्नार्थमेकमनेकं वा तद्वदक्षरमावृत्तं स्थाननियमे सति[7] यमकम् । स्वावृत्त्या[8] सजातीयेन वा कार्त्स्न्यैकदेशाभ्यामनेकपादव्याप्तिः स्थाननियम इति । यानि त्वेकपादभागवृत्तीनि यमकानि दृश्यन्ते तेषु श्लोकान्तरस्थसंस्थानयमकापेक्षयैव स्थाननियम इति ।

स्थानकथनार्थमाह—

**पादः पादस्यैकस्यानेकस्य चादिमध्यान्तभागाः स्थानानि॥२॥**

पादः, एकस्य च[9] पादस्यादिमध्यान्तभागाः, अनेकस्य च पादस्य[10] त एव स्थानानि । पादयमकं यथा—

'असज्जनवचो यस्य कलिकामधुगर्हितम् ।
तस्य न स्याद्विपतरोः कलिकामधु गर्हितम् ॥'

---

१. 'त्यक्तो' क-ग. २. दशदाडिमादिवाक्यं व्याकरणमहाभाष्ये 'अर्थवदधातुः' इत्यादि सूत्रव्याख्याने द्रष्टव्यम्. ३. 'विवेकः' क, 'कथनम्' ग. ४. 'गुणानां वृत्त्या' ग. ५. 'लक्षयितुं' क. ६. 'वावृत्तं' ग. ७. 'नियमे सति' ख. ८. 'स्ववृत्त्या' क, 'आवृत्त्या' ग. ९. 'च' ख-पुस्तके नास्ति. १०. 'पदस्य' क.

एकपाद[1]त्यादिमध्यान्त[2]यमकानि यथा—

'हन्त हन्तररातीनां धीरधीरर्चिता तव ।
कामं कामन्दकी नीतिरस्या रस्या दिवानिशम् ॥'

'वसुपरासु परासुमिवोज्झतीष्ववेिकलं विकलङ्कशशिप्रभम् ।
प्रियतमं [3]यतमन्तुमनीश्वरं रसिकता सिकतास्विव तासु का ॥'

'सुदृशोऽवसरे चकितं चकितं भवतीक्षितमस्ति मितं स्तिमितम् ।
अपि हासलवस्तव कः स्तबकस्तुलये[4]न्न तु कामधुरां मधुराम् ॥'

पादयोरादिमध्यान्तयमकानि यथा—

'भ्रमर द्रुमपुष्पाणि भ्रम रत्यै पिबन्मधु ।
का कुन्दकुसुमे प्रीतिः काकुं दत्त्वा विरौषि यत् ॥'

'अप्युद्गाक्यं त्वया दत्तं दुःखं शक्यन्तरात्मनि ॥
बाष्पो बाह्लीकनारीणां वेगवाही कपोलयोः ॥'

'सपदि कृतपदस्त्वदीक्षितेन स्मितशुचिना स्मरतत्त्वदीक्षितेन ।
भवति बत जनः सचित्तदाहो न खलु मृषा कुत एव चित्त[5]दाहो ॥'

एकान्तर[6]पादान्तयमकं यथा—

'उद्वेजयति भूतानि यस्य राज्ञः कुशासनम् ।
सिंहासनवियुक्तस्य तस्य क्षिप्रं कुशासनम् ॥'

एवमेकान्तरपादादिमध्ययमकान्यूह्यानि । समस्तपादान्त[7]यमकं यथा—

'नतोन्नतभ्रूगतिबद्धलास्यां विलोक्य तन्वीं शशिपेशलास्याम् ।
मनः किमुत्ताम्यसि चञ्चलास्यां [8]कृती स्मराज्ञा यदि पुष्कला स्याम् ।

एवं समस्त[9]पादादिमध्यान्तयमकानि [10]व्याख्यातानि । अन्ये च संकरजातिभेदाः सुधियोत्प्रेक्ष्याः ।

अक्षरयमकं त्वेकाक्षरमनेकाक्षरं च । एकाक्षरं यथा—

'[11]नानाकारेण कान्ताभ्रूराराधितमनोभुवा ।
विविक्तेन विलासेन ततक्ष हृदयं नृणाम् ॥'

---

१. 'एकस्य' क. २. 'यमकं' ख. ३. 'यतमन्तुं' क-ग. ४. 'ननु' क, 'तु न' ग. ५. 'चित्तदाहः' ख. ६. 'पादयमकं' क. ७. 'यमकं च भवति । यथा' ख. ८. 'कुतो' ग. ९. 'पादादियमकानि' क, 'पादयमकानि' ग. १०. 'व्याख्यातव्यानि' ग. ११. 'नानाविधेन' ख.

एवं स्थानान्तरयोगेऽपि द्रष्टव्यः । सजातीयनैरन्तर्यादस्य प्रकर्षो भवति । स चायं हरिप्रबोधे दृश्यते । यथा—

'विविधधववनानागगर्धर्धनाना विविततगगनानाममज्जज्जनाना ।
रुरुशशललनाना ववन्धुन्धुनाना मम हिंहिं ततनानाननस्वस्वनाना ॥'

अनया च[1] वर्णयमकमालया पदयमकमाला व्याख्याता ।

**भङ्गादुत्कर्षः ॥ ३ ॥**

उत्कृष्टं खलु यमकं भङ्गाद्भवति ।

**शृङ्खला परिवर्तकश्चूर्णमिति भङ्गमार्गः ॥ ४ ॥**

एते खलु शृङ्खलादयो यमकभङ्गानां प्रकारा भवन्ति ।

तान्क्रमेण व्याचष्टे—

**वर्णविच्छेदचलनं शृङ्खला ॥ ५ ॥**

वर्णानां विच्छेदो वर्णविच्छेदः[3] तस्य चलनं यत्सा शृङ्खला ।

यथा—'कलिकामधुशब्दे[4] विच्छेदः धुशब्दे[5] च तस्य चलनम् । लिमर्वर्णयोर्विच्छेदात् ।

**सङ्गविनिवृत्तौ स्वरूपापत्तिः परिवर्तकः ॥ ६ ॥**

अन्यवर्णसंसर्गः सङ्गः । तद्विनिवृत्तौ स्वरूपस्यान्यरूपतिरस्कृतस्यापत्तिः प्राप्तिः परिवर्तकः ।

यथा—'कलिकामधु गर्हितम्' इति । अत्रार्हितमिति पदं गकारस्य व्यञ्जनस्य सङ्गाद्गर्हितमित्यन्यस्य रूपमापन्नम् । तत्र व्यञ्जनसङ्गे विनिवृत्ते स्वरूपमापद्यते अर्हितमिति । अन्यवर्णसंक्रमेण भिन्नरूपस्य पदस्य ताद्रूप्यविधिरयमिति तात्पर्यार्थः । एतेनेतरावपि व्याख्यातौ ।

**पिण्डाक्षरभेदे स्वरूपलोपश्चूर्णम् ॥ ७ ॥**

---

१. 'च' क-ग-पुस्तकयोर्नास्ति. २. 'तत्र' ग. ३. 'वर्णविच्छेदः' ख-पुस्तके नास्ति. ४. 'कलिकामधुकशब्दे' ग. ५. 'मधुशब्दे' क, 'काशब्दे धुशब्दे' ग. ६. 'शब्दयोः' क-ग. ७. 'निवृत्तौ' ख. ८. 'सरूपस्य' ख. ९. 'व्यञ्जनस्य गकारस्य सङ्गे' क. १०. 'अयं' ख-पुस्तके नास्ति.

पिण्डाक्षरभेदे सति पदस्य स्वरूपलोपश्चूर्णम् । यथा—

'योऽचलकुलमवति चलं दूरसमुन्मुक्तशुक्तिमीनां कान्तः ।
साग्नि[2] बिभर्ति च सलिलं दूरसमुन्मुक्तशुक्तिमीनाक्रान्तः ॥'

अत्र शुक्तिपदे क्तीति पिण्डाक्षरम् । तस्य भेदे शुक्तिपदं लुप्यते । ककारतिकारयोरन्यत्र संक्रमात् । दूरसमुन्मुक्तशुक् अचलकुलम्, तिमीनां कान्तः समुद्रः ।

श्लोकाश्चात्र—

'अखण्डवर्णविन्यासचलनं शृङ्खला मता ।
अनेन खलु भङ्गेन यमकानां विचित्रता ॥'
'यदन्यसङ्गमुत्सृज्य नेपथ्यमिव नर्तकः ।
शब्दस्वरूपमारोहेत्स ज्ञेयः परिवर्तकः ॥'
'पिण्डाक्षरस्य[1] भेदेन पूर्वापरपदाश्रयात्[3] ।
वर्णयोः पदलोपो यः स भङ्गश्चूर्णसंज्ञकः ॥'
'अप्राप्तचूर्णभङ्गानि यथास्थानस्थितान्यपि ।
अलकानीव नात्यर्थं यमकानि चकासति ॥'
'विभक्तिपरिणामेन यत्र भङ्गः[4] क्वचिद्भवेत् ।
न तदिच्छन्ति यमकं यमकोत्कर्षकोविदाः[5] ॥'
'आरूढं भूयसा यत्तु पदं यमकभूमिकाम् ।
न युज्यते पुनस्तस्य युक्तानुप्रासकल्पना ॥'
'विभक्तीनां विभक्तत्वं संख्यायाः कारकस्य च ।
आवृत्तिः सुप्तिङन्तानां मिथश्च[6] यमकाद्भुतम् ॥'

**शेषः सरूपोऽनुप्रासः[7] ॥ ८ ॥**

पदमेकार्थमनेकार्थं च स्थानानियतं[8] तद्विधमक्षरं च शेषः । सरूपोऽन्येन प्रयुक्तेन तुल्यरूपोऽनुप्रासः । ननु च[9] 'शेषोऽनुप्रासः' इत्येतावदेव सूत्रं

१. 'पिण्डाक्षरस्य' क. २. 'साग्निं' ख. ३. 'समाश्रयात्' क. ४. 'भेदः' क-ग. ५. 'प्रायो यमककोविदाः' ख. ६. 'इत्थं' ग. ७. 'शेषस्वरूपो' क-ग. ८. 'अस्थाननियमेन' ख. ९. 'च' ख-पुस्तके नास्ति.

कस्मान्न कृतम्, आवृत्तिशेषोऽनुप्रास इत्येव हि व्याख्यास्यते । सत्यम् । सिध्यत्येवावृत्तिशेषे[1] । किं त्वव्याप्तिप्रसङ्गः । विशेषार्थं च सरूपग्रहणम् । कात्स्न्र्येनैवावृत्तिः कात्स्न्र्यैकदेशाभ्यां तु सारूप्यमिति ।

**अनुल्बणो वर्णानुप्रासः श्रेयान् ॥ ९ ॥**

वर्णानामनुप्रासः स खल्वनुल्बणो लीनः[3] श्रेयान् । यथा—

'क्वचिन्मसृणमांसलं क्वचिदतीव तारास्पदं
प्रसन्नसुभगं मुहुः स्वरतरङ्गलीलाङ्कितम् ।
इदं हि तव वल्लकीरणितनिर्गमैर्गुम्फितं
मनो मदयतीव मे किमपि साधुसंगीतकम् ॥'

उल्बणस्तु न श्रेयान् । यथा—'वल्लीवद्धोर्ध्वजूटोद्भटमटति रटत्कोटिकोदण्डदण्डः' इति ।

**पादानुप्रासः पादयमकवत् ॥ १० ॥**

ये पादयमकस्य भेदास्ते पादानुप्रासस्येत्यर्थः । तेषामुदाहरणानि यथा—

'कविराजमविज्ञाय कुतः काव्यक्रियादरः ।
कविराजं च विज्ञाय कुतः काव्यक्रियादरः ॥'

'आखण्डयन्ति मुहुरामलकीफलानि
बालानि बालकपिलोचनपिङ्गलानि ।'

'वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसंकाश काशाः
काशाभा भान्ति तासां नवपुलिनगताः श्रीनदीहंस हंसाः ।
हंसाभाम्भोदमुक्तः स्फुरदमलरुचिर्मेदिनीचन्द्र चन्द्रः
चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां काल कालः ॥'

'कुवलयदलश्यामा मेघा विहाय दिवं गताः
कुवलयदलश्यामो निद्रां विमुञ्चति केशवः ।

१. 'विशेषे' ग. २. 'च' ख. ३. 'लीन इव' ग. ४. 'वपुः' क. ५. 'उपगतो' क.

'कुवलयदलश्यामा श्यामालताद्य विजृम्भते
कुवलयदलश्यामं चन्द्रो नभः प्रविगाहते ॥'[1]

एवमन्येऽपि भेदा[2] द्रष्टव्याः ।

इति काव्यालंकारसूत्रवृत्तावालंकारिके चतुर्थेऽधिकरणे प्रथमोऽध्यायः ।

शब्दालंकारविचारः ।

द्वितीयोऽध्यायः ।

संप्रत्यर्थालंकाराणां प्रस्तावः । तन्मूलं चोपमेति सैव विचार्यते—

[3]उपमानेनोपमेयस्य गुणलेशतः साम्यमुपमा ॥ १ ॥

उपमीयते सादृश्यमानीयते येनोत्कृष्टगुणेनान्यत्तदुपमानम्[4] । यदुपमीयते न्यूनगुणं[5] तदुपमेयम् । उपमानेनोपमेयस्य गुणलेशतः साम्यं यदसावुपमेति । ननूपमानमित्युपमेयमिति[6] च संबन्धिशब्दावेतौ तयोरेकतरोपादानेनैवान्यतरसिद्धिरिति[7] । यथा—'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे'[8] इत्यत्रोपमितग्रहणमेव कृतं नोपमानग्रहणमिति, तद्वदत्रोभयग्रहणं न कर्तव्यम्[9] । सत्यम् । तत्कृतं[10] लोकप्रसिद्धिपरिग्रहार्थम् । यदेवोपमेयमुपमानं च लोकप्रसिद्धं तदेव परिगृह्यते, नेतरत् । नहि यथा 'मुखं कमलमिव' इति, तथा 'कुमुदमिव' इत्यपि[11] भवति[12] ।

गुणवाहुल्यतश्च कल्पिता ॥ २ ॥

गुणानां वाहुल्यं गुणवाहुल्यं तत उपमानोपमेयस्य साम्यात्कल्पितोपमा । कविभिः कल्पितत्वात्कल्पिता । पूर्वा तु लौकिकी । ननु[13] कल्पितायाः लोकप्रसिद्ध्यभावात्कथमुपमानोपमेयनियमः । गुणवाहुल्यस्योत्कर्षापकर्षकल्पनाभ्याम् । तद्यथा—

१. 'प्रतिगाहते' क. २. 'भेदा' ख-पुस्तके नास्ति. ३. 'उपमानोपमेयस्य गुणशालिनः साम्यमुपमा' क. ४. 'अन्यस्य यत्तदुप' ख. ५. 'यन्यून' क-ख. ६. 'ननु चोप' ख. ७. 'पादानेन चान्य' ख. ८. 'सामान्यप्र' क-ख. ९. 'कर्तव्यमिति' ख. १०. 'तत्कथं' क. ११. 'अपि' ख-पुस्तके नास्ति. १२. ग-पुस्तके भवतीत्यस्मादग्रे 'अथवा लौकिक्याश्च कल्पितताया उपमाया ग्रहणं मा विजानीहि एतदर्थमुभयग्रहणम्' इत्यधिकमस्ति. १३. ख-पुस्तके नन्वित्यादि कल्पनाभ्यामित्यन्तं कोष्ठकान्तः स्थापितमस्ति.

'उद्गर्भहूणतरुणीरमणोपमर्द-
भुग्नोन्नतिस्तननिवेशनिभं हिमांशोः।
बिम्बं कठोरबिसकाण्डकडारगौरै-
र्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥'

'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम् ।'
'अभिनवकुशसूचिस्पर्धि कर्णे शिरीषम्' इति।

'इदानीं प्लक्षाणां जरठदलविश्लेषचतुरः
शिखानामाबन्धः स्फुरति शुकचञ्चूपुटनिभः।
ततः स्त्रीणां हन्त क्षममधरकान्ति तुलयितुं
समन्तान्निर्याति स्फुटसुभगरागं किसलयम् ॥

**तद्वैविध्यम् । पदवाक्यार्थवृत्तिभेदात् ॥ ३ ॥**

तस्या उपमाया द्वैविध्यम्। पदवाक्यार्थवृत्तिभेदात्। एका पदार्थवृत्तिः, अन्या वाक्यार्थवृत्तिरिति। पदार्थवृत्तिर्यथा—

'हरति तनुषु बभ्रुत्वग्विमुक्तासु यासां
कनककणसधर्मा मान्मथो रोमभेदः।'

वाक्यार्थवृत्तिर्यथा—

'पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो नवचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥'

**सा पूर्णा लुप्ता च ॥ ४ ॥**

सा उपमा पूर्णा लुप्ता च भवति।

**गुणद्योतकोपमानोपमेयशब्दानां सामग्र्ये पूर्णा ॥ ५ ॥**

गुणादिशब्दानां सामग्र्ये साकल्ये पूर्णा। यथा—

'कमलमिव मुखं मनोज्ञमेतत्' इति।

**लोपे लुप्ता ॥ ६ ॥**

१. 'भग्नोन्नति' क-ग. २. 'कुसुमस्पर्धि' ग. ३. 'चतुरस्तिमीनां साबंधः स्फुरति' क, 'चतुरस्तिमीनामाबद्धस्फुरति' ग. ४. 'उद्भाति' ख. ५. 'कनककलशधर्मा' ग.

गुणादिशब्दानां वैकल्पे लोपे लुप्ता । गुणशब्दलोपे यथा—'शशीव राजा' इति । द्योतकशब्दलोपे यथा—'दूर्वाश्यामेयम्' । उभयलोपे[1] यथा—'शशिमुखी' इति । उपमानोपमेयलोपस्तूपमाप्रपञ्चे[2][3] द्रष्टव्यः ।

**स्तुतिनिन्दातत्त्वाख्यानेषु ॥ ७ ॥**

स्तुतौ निन्दायां[4] तत्त्वाख्याने[5] चास्याः प्रयोगः । स्तुतिनिन्दयोर्यथा[6]—

> 'स्निग्धं भवत्यमृतकल्पमहो कलत्रं
> हालाहलं विषमिवापगुणं[7] तदेव ।'

तत्त्वाख्याने यथा—

> 'तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
> यस्तन्वि तारकान्यासः शकटाकारमाश्रितः ॥'

**हीनत्वाधिकत्वलिङ्गवचनभेदासादृश्यासंभवास्तद्दोषाः ॥ ८ ॥**

तस्या उपमाया दोषा भवन्ति—हीनत्वमधिकत्वं लिङ्गभेदो वचनभेदोऽसादृश्यमसंभव इति ।

तान्क्रमेण व्याख्यातुमाह—

**जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम् ॥ ९ ॥**

जात्या प्रमाणेन धर्मेण चोपमानस्य न्यूनता या तद्धीनत्वमिति ।

जातिन्यूनत्वरूपं हीनत्वं यथा—'चाण्डालैरिव युष्माभिः साहसं परमं कृतम् ।'

प्रमाणन्यूनत्वरूपं[9] हीनत्वं यथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति[10] ।'

उपमेयादुपमानस्य धर्मतो[8] न्यूनत्वं यत्तद्धर्मन्यूनत्वम्[11] । तद्रूपं हीनत्वं यथा—

> 'स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
> व्यराजन्नीलजीमूतभागाश्लिष्ट[12] इवांशुमान् ॥'

---

१. 'उभयशब्द' ख. २. 'उपमानोपमेयशब्द' ग. ३. 'प्रपञ्च एव' ग. ४. 'निन्दायां च' ख. ५. 'तत्त्वाख्यानेषु' ग. ६. 'निन्दादयो' क. ७. 'विषमिव प्रगुणं' क, 'विषमिवाप गुणं' ग. ८. 'धर्मतो' ग. ९. 'प्रमाणन्यूनत्वं तद्रूपहीनत्वं' क. १०. विभाति' ग. ११. 'यत्' ख-पुस्तके नास्ति. १२. 'व्यरोचत्' ख.

अत्र मौञ्जीप्रतिवस्तु तडिन्नास्त्युपमान[1] इति हीनत्वम् । न च कृष्णाजिनपटमात्रस्योपमेयत्वं युक्तम् । मौञ्ज्या व्यर्थत्वप्रसङ्गात् । ननु नीलजीमूतग्रहणेनैव तडित्प्रतिपाद्यते । तन्न । व्यभिचारात् । अव्यभिचारे तु भवन्ती[2] प्रतिपत्तिः केन वार्यते[3] । तदाह—

**धर्मयोरेकनिर्देशेऽन्यस्य संवित् । साहचर्यात् ॥ १० ॥**

धर्मयोरेकस्यापि धर्मस्य निर्देशेऽन्यधर्मस्य[4] संवित् प्रतिपत्तिर्भवति । कुतः । साहचर्यात् । सहचरितत्वेन प्रसिद्धयोरवश्यमेकस्य निर्देशेऽन्यस्य प्रतिपत्तिर्भवति[5] । तद्यथा—

'निर्धूष्टेऽपि बहिर्घने न विरमन्त्यन्तर्जरद्वेश्मनो
लूतातन्तुततिच्छिदो मधुप्रषत्पिङ्गाः पयोविन्दवः ।
चूडाबर्बरके निपत्य कणिकाभावेन जाताः शिशो-
रङ्गास्फालनभग्ननिद्रगृहिणीचित्तव्यथादायिनः ॥'[6]

अत्र मधुप्रषतां वृत्तत्वपिङ्गत्वे सहचरिते । तत्र पिङ्गशब्देन पिङ्गत्वे प्रतिपन्ने वृत्तत्वप्रतिपत्तिर्भवति[7] । एतेन 'कनकफलकचतुरस्रं श्रोणिविम्बम्' इति व्याख्यातम् । कनकफलकस्य गौरत्वचतुरस्रत्वयोः साहचर्याच्चतुरस्रत्वश्रुत्यैव गौरत्वप्रतिपत्तिरिति । ननु च यदि धर्मन्यूनत्वमुपमानस्य दोषः, कथमयं प्रयोगः—

'सूर्यांशुसंमीलितलोचनेषु दीनेषु[8] पद्मानिलनिर्मदेषु[9] ।
साध्व्यः स्वगेहेष्विव भर्तृहीनाः केका विनेशुः शिखिनां मुखेषु ॥'

अत्र बहुत्वमुपमेयधर्माणामुपमानात्[10] । विशिष्टानामेव मुखानामुपमेयत्वात्[11] । तादृशेष्वेव केकाविनाशस्य संभवात् ।

**तेनाधिकत्वं व्याख्यातम् ॥ ११ ॥**

तेन हीनत्वेनाधिकत्वं व्याख्यातम्, जातिप्रमाणधर्माधिक्यमधिकत्वमिति । जात्याधिक्यरूपमधिकत्वं यथा—

---

१. 'उपमानं' ख. २. 'संभवन्ती' ख. ३. 'विचार्यंते' क. ४. 'अन्यस्य' ग. ५. 'भवति' क-ख-पुस्तकयोर्नास्ति. ६. 'रङ्काच्छादन' क. ७. 'प्रतीति' क. ८. 'दिनेषु' ख. ९. 'निर्मलेषु' ख, 'नर्मदेषु' क-ग. १०. 'उपमानतः' ख. ११. 'उपमेयत्वम्' क.

'विशन्तु वृष्णयः शीघ्रं रुद्रा इव महौजसः ।'

प्रमाणाधिक्यरूपं यथा—

'पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥'

धर्माधिक्यरूपं यथा—

'सरश्मि चञ्चलं चक्रं दधद्देवो व्यराजत ।
सवाडवाग्निः सावर्तः स्रोतसामिव नायकः ॥'

सवाडवाग्निरित्यस्योपमेये[1]ऽभावाद्धर्माधिक्यमिति । अनयोर्दोषयोर्विपर्ययाख्यस्य दोषस्यान्तर्भावान्न पृथगुपादानम् । अत एवास्माकं मते षड्दोषा इति ।

**उपमानोपमेययोर्लिङ्गव्यत्यासो लिङ्गभेदः ॥ १२ ॥**

उपमानस्योपमेयस्य च लिङ्गयोर्व्यत्यासो विपर्ययो लिङ्गभेदः । यथा—
'सैन्यानि नद्य इव जग्मुरनर्गलानि ।'

**इष्टः पुंनपुंसकयोः प्रायेण ॥ १३ ॥**

पुंनपुंसकयोरुपमानोपमेययोर्लिङ्गभेदः प्रायेण बाहुल्येनेष्टः । यथा—
'चन्द्रमिव मुखं पश्यति' इति । 'इन्दुरिव मुखं भाति' [2]एवंप्रायं तु नेच्छन्ति । यत्र यदि अन्वयक्षमः तत्र न दोषः, अन्यत्र तु दोषः.

**लौकिक्यां समासाभिहितायामुपमाप्रपञ्चे च ॥ १४ ॥**

लौकिक्या[3]मुपमायां समासाभिहितायामुपमायामुपमाप्रपञ्चे चेष्टो लिङ्गभेदः प्रायेणेति । लौकिक्यां यथा—'छायेव स तस्य' 'पुरुष [4]इव स्त्री' इति । समासाभिहितायां यथा—'भुजलता नी[5]लोत्पलसदृशी' इति । उपमाप्रपञ्चे यथा—

'शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥'

---

१. 'उपमेयत्वाभावात्' ख, 'उपमेयाभावात्' ग. २. 'इत्येवंप्रायं' ख. ३. 'उपमायां' क-पुस्तके नास्ति. ४. 'इवास्तीति' ग. ५. 'नीलोत्पलसदृश' इति क, 'नीलोत्पलं दृश्यते' ग.

एवमन्यदपि प्रयोगजातं द्रष्टव्यम् ।

**तेन[1] वचनभेदो व्याख्यातः ॥ १५ ॥**

तेन लिङ्गभेदेन वचनभेदो व्याख्यातः । यथा—'पश्यामि लोचने तस्याः पुष्पं पुष्पलिहो यथा ।'

**अप्रतीतगुणसादृश्यमसादृश्यम् ॥ १६ ॥**

अप्रतीतैरेव गुणैर्यत्सादृश्यं तदप्रतीतगुणसादृश्यमसादृश्यम् । यथा—'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' काव्यस्य शशिना सह यत्सादृश्यं तदप्रतीतैरेव गुणैरिति । ननु चार्थानां रश्मितुल्यत्वे[2] सति काव्यस्य शशितुल्यत्वं भविष्यति । मैवम्[3] । काव्यस्य शशितुल्यत्वे सिद्धेऽर्थानां रश्मितुल्यत्वं सिद्ध्यति । नह्यर्थानां रश्मीनां च कश्चित्सादृश्यहेतुः प्रतीतो गुणोऽस्ति । तदेवमितरेतराश्रयदोषो दुरुत्तर इति ।

**असादृश्यहता ह्युपमा । तन्निष्ठाश्च कवयः ॥ १७ ॥**

असादृश्येन हता असादृश्यहता उपमा, तन्निष्ठा उपमाननिष्ठाश्च तत्पराः कवय इति ।

**उपमानाधिक्यात्तदपोह इत्येके ॥ १८ ॥**

उपमानाधिक्यात्तस्यासादृश्यस्यापोह[4] इत्येके मन्यन्ते । यथा—'कर्पूरहारहरहाससितं यशस्ते ।' कर्पूरादिभिरुपमानैर्बहुभिर्यशसः सादृश्यं संस्थापितं[5] भवति । तेषां शुक्लगुणातिरेकात् ।

**नापुष्टार्थत्वात् ॥ १९ ॥**

उपमानाधिक्यात्तदपोह इति यदुक्तं[6] तन्न । अपुष्टार्थत्वात् । एकस्मिन्नुपमाने प्रयुक्ते उपमानान्तरप्रयोगो[7] न कंचिदर्थविशेषं पुष्णाति । तेन 'बलसिन्धुः सिन्धुरिव क्षुभितः' इति प्रयुक्तम् । ननु सिन्धुशब्दस्य द्विःप्रयोगात्पौनरुक्त्यम्[8] । न । अर्थविशेषात् । बलं सिन्धुरिव वैपुल्याद्बलसिन्धुः सिन्धुरिव क्षुभित इति क्षोभसारूप्यम्[9] । तस्मादर्थभेदान्न पौनरु-

---

१. 'एतेन' ग. २. 'तुल्यत्वे सिद्धे' क. ३. 'नैवम्' क. ४. 'उपमानानामाधि' क. ५. 'सुस्थापितं क. ६. 'इत्युक्तं' क. ७. 'उपमानानन्तर' ख. ८. 'प्रयोगत्वात्' ख. ९. 'क्षोभसारूप्यात्' क.

क्त्यम् । अर्थपुष्टिस्तु नास्ति । सिन्धुरिव क्षुभित इत्यनेनैव वैपुल्यं प्रतिपत्स्यते । उक्तं हि—'धर्मयोरेकनिर्देशेऽन्यसंवित् । साहचर्यात् ।'

**अनुपपत्तिरसंभवः ॥ २० ॥**

अनुपपत्तिरनुपपन्नत्वमुपमानस्यासंभवः । यथा—

'चकास्ति वदने तस्याः स्मितच्छाया विकासिनि ।
उन्निद्रस्यारविन्दस्य मध्ये मुग्धेव चन्द्रिका ॥'

चन्द्रिकायामुन्निद्रत्वमरविन्दस्येत्यनुपपत्तिः । नन्वर्थविरोधोऽयमस्तु । किमुपमादोषकल्पनया । न । उपमायामतिशयस्येष्टत्वात् । कथं तर्हि दोषः ।

**न विरुद्धोऽतिशयः ॥ २१ ॥**

विरुद्धस्यातिशयस्य संग्रहो न कर्तव्य इत्यस्य सूत्रस्य तात्पर्यार्थः । तानेतान्षडुपमादोषान् ज्ञात्वा कविः परित्यजेत् ।

इति काव्यालंकारसूत्रवृत्तावालंकारिके चतुर्थेऽधिकरणे द्वितीयोऽध्यायः ।
उपमाविचारः ।

---

तृतीयोऽध्यायः ।

संप्रत्युपमाप्रपञ्चो विचार्यते—कः पुनरसावित्याह—

**प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः ॥ १ ॥**

प्रतिवस्तु प्रभृतिर्यस्य स प्रतिवस्तुप्रभृतिः । उपमायाः प्रपञ्च उपमाप्रपञ्च इति ।

वाक्यार्थोपमायाः प्रतिवस्तुनो भेदं दर्शयितुमाह—

**उपमेयस्योक्तौ समानवस्तुन्यासः प्रतिवस्तु ॥ २ ॥**

समानं वस्तु वाक्यार्थः । तस्य न्यासः समानवस्तुन्यासः । उपमेयस्यार्थाद्वाक्यार्थस्योक्तौ सत्यामिति । अत्र द्वौ वाक्यार्थौ । एको वाक्यार्थः [illegible] इति भेदः । तद्यथा—

---

१. 'अर्थविशेषात्पुष्टिस्तु' ग. २. 'इति वैपुल्यम्' क-ग. ३. 'विकासिनः' क. ४. 'विकल्पनया' क. ५. 'इष्टार्थत्वात्' ख. ६. 'षड्दोषानुपमायाः' ख. ७. 'उपमाकथनम्' ग. ८. 'इति' क-ख-पुस्तकयोर्नास्ति. ९. 'यस्येति' ख. १०. 'वाक्यार्थोपमयोरिति' क, 'वाक्यार्थं उपमायामिति' ख.

'देवीभावं गमिता परिवारपदं कथं भजत्येषा ।[१]
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥'

प्रतिवस्तुनः समासोक्तेर्भेदं दर्शयितुमाह—

**अनुक्तौ समासोक्तिः ॥ ३ ॥**

उपमेयस्या[२]नुक्तौ समानवस्तुन्यासः समासोक्तिः । संक्षेपवचनात्समासोक्तिरित्याख्या । यथा—

'श्लाघ्या ध्वस्ताध्वगग्लानेः करीरस्य मरौ स्थितिः ।
धिङ्मेरौ कल्पवृक्षाणामनुत्पन्नार्थिनां श्रियः ॥'

समासोक्तेरप्रस्तुतप्रशंसाया भेदं दर्शयितुमाह—

**किंचिदुक्तावप्रस्तुतप्रशंसा ॥ ४ ॥**

उपमेयस्य किंचिल्लिङ्गमात्रेणोक्तौ समानवस्तुन्यासेऽप्रस्तुतप्रशंसा । यथा—

'लावण्यसिन्धुरपरैव हि केयमत्र[३]
यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥'

अप्रस्तुतस्यार्थस्य प्रशंसनमप्रस्तुतप्रशंसा ।

अपह्नुतिरपि ततो भिन्नेति दर्शयितुमाह—

**समेन वस्तुनान्यापलापोऽपह्नुतिः ॥ ५ ॥**

समेन तुल्येन वस्तुना वाक्यार्थेनान्यस्य वाक्यार्थस्यापलापो निह्नवो यस्तत्त्वाध्यारोपणायासावपह्नुतिः[४] । यथा—

'न केतकीनां विलसन्ति सूचयः प्रवासिनो हन्त हसत्ययं विधिः ।
तडिल्लतेयं न चकास्ति चञ्चला पुरः स्मरज्योतिरिदं विवर्तते[५] ॥'

वाक्यार्थयोस्तात्पर्यात्ताद्रूप्यमिति न रूपकम् ।*

१. 'रत्नम्' इत्यस्मादनन्तरं क-पुस्तके 'अत्रैको वाक्यार्थः' इत्यधिकमस्ति. २. 'उपमानस्य' ख. ३. 'काचनेयं' ख. ४. 'यस्तस्याध्यारोपेणासा' ख, 'यस्तत्त्वारोपेणासा' ग. ५. 'प्रवर्तते' ख.

रूपकं तु कीदृशमित्याह—

**उपमानोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम् ॥ ६ ॥**

उपमानोपमेयस्य गुणसाम्यात्तत्त्वस्याभेदस्यारोपणमारोपो रूपकम् । उपमानोपमेययोरुभयोरपि ग्रहणं लौकिक्याः कल्पितायाश्चोपमायाः प्रकृतित्वमत्र यथा विज्ञायेतेति । यथा—

'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि वहलश्चन्दनरसः ।
अयं कण्ठे वाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥'

मुखचन्द्रादीनां तूपमा समासात् न चन्द्रादीनां रूपकत्वं युक्तमिति ।

रूपकाच्छ्लेषस्य भेदं दर्शयितुमाह—

**सधर्मेषु तन्त्रप्रयोगे श्लेषः ॥ ७ ॥**

उपमानेनोपमेयस्य धर्मेषु गुणक्रियाशब्दरूपेषु सतत्त्वारोपस्तन्त्रप्रयोगे तन्त्रेणोच्चारणे सति श्लेषः । यथा—

'आकृष्टामलमण्डलाग्ररुचयः संनद्धवक्षःस्थलाः
सोष्माणो व्रणिता विपक्षहृदयप्रोन्माथिनः कर्कशाः ।
उद्वृत्ता गुरवश्च यस्य शमिनः श्यामायमानानना
योधा वारवधूस्तनाश्च न दधुः क्षोभं स वोऽव्याज्जिनः ॥'

यथा च गौणस्यार्थस्यालंकारत्वं तथा लाक्षणिकस्यापीति दर्शयितुमाह—

**सादृश्याल्लक्षणा वक्रोक्तिः ॥ ८ ॥**

वहूनि हि निबन्धनानि लक्षणायाम् । तत्र सादृश्याल्लक्षणा वक्रोक्तिरसाविति । यथा—'उन्मिमील कमलं सरसीनां कैरवं च निमिमील मुहूर्तात् ।'

अत्र नेत्रधर्मावुन्मीलननिमीलने सादृश्याद्विकाससंकोचौ लक्षयतः ।

---

१. 'रूपकं दर्शयितुमाह' ग. २. 'विज्ञायत इति' ख. ३. 'वल्लि' क. ४. 'न तत्त्वा' ख. ५. 'वारवधू' ख. ६. 'ददुः' क. ७. 'हि' क-पुस्तके नास्ति. ८. 'लक्षणायाः' क. ९. 'सादृश्याद्वा' ग.

'इह च निरन्तरनवमुकुलपुलकिता हरति माधवी हृदयम् ।
मदयति च केसराणां परिणतमधुगन्धि निःश्वसितम् ॥'

अत्र निःश्वसितमिति परिमलनिर्गमं लक्षयति ।

'संस्थानेन स्फुरतु सुभगः स्वर्चिषा[1] चुम्बितुं[2] द्याम् ।'

'आलस्यमालिङ्गति गात्रमस्याः ।'

'परिम्लानच्छायामनु वदति दृष्टिः कमलिनीम् ।'

'प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकृपायः ।'

'ऊरुद्वन्द्वं तरुणकदलीकाण्डसब्रह्मचारि ।'

इत्येवमादिषु लक्षणार्थो निरूप्यत इति । लक्षणायां च[3] झटित्यर्थप्रतिपत्तिक्षमत्वं रहस्यमाचक्षत इति[4] । असादृश्यनिबन्धना तु[5] लक्षणा न वक्रोक्तिः । यथा—'जरठकमलकन्दच्छेदगौरैर्मयूखैः ।'

अत्र च्छेदः सामीप्या[6]द्द्रव्यं लक्षयति । तस्यैव गौरत्वोपपत्तेः ।

रूपकवक्रोक्तिभ्यामुत्प्रेक्षाया[7] भेदं दर्शयितुमाह—

**अतद्रूपस्यान्यथाध्यवसानमतिशयार्थमुत्प्रेक्षा ॥ ९ ॥**

अतद्रूपस्यातत्स्वभावस्य । अन्यथा अतत्स्वभावतया । अध्यवसानमध्यवसायः । न पुनरध्यारोपो लक्षणा वा । अतिशयार्थमिति[8] भ्रान्तिज्ञाननिवृत्त्यर्थम् । सादृश्यादियमुत्प्रेक्षेति । एनां चेवादिशब्दा द्योतयन्ति[9] । यथा—

'स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः ।
स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥'

---

१. 'स्वार्चिषा' क. २. 'चुम्बतु' ग. ३. 'च' ख-ग-पुस्तकयोर्नास्ति. ४. 'इति' क-पुस्तके नास्ति. ५. 'तु' ख-पुस्तके नास्ति. ६. 'साम्यात्' ग. ७. 'उत्प्रेक्षायां' क. ८. 'इति च' ख. ९. 'चेवादिशब्दो द्योतयति' क-ग.

उत्प्रेक्षैवातिशयोक्तिरिति केचित् । तन्निरासार्थमाह—

**संभाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिः ॥ १० ॥**

संभाव्यस्य धर्मस्य तदुत्कर्षस्य च कल्पनातिशयोक्तिः । यथा—

'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥'

यथा वा—

'मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्त्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥'

यथा भ्रान्तिज्ञानस्वरूपोत्प्रेक्षा तथा संशयज्ञानस्वरूपः संदेहोऽपीति दर्शयितुमाह—

**उपमानोपमेयसंशयः संदेहः ॥ ११ ॥**

उपमानोपमेययोरतिशयार्थं यः क्रियते संशयः स संदेहः । यथा—

'इदं कर्णोत्पलं चक्षुरिदं चेति विलासिनि ।
न निश्चिनोति हृदयं किंतु दोलायते पुनः ॥'

संदेहवद्विरोधोऽपि प्राप्तावसर इत्याह—

**विरुद्धाभासत्वं विरोधः ॥ १२ ॥**

अर्थस्य विरुद्धस्येवाभासत्वं विरुद्धाभासत्वं विरोधः । यथा—

'पीतं पानमिदं त्वयाद्य दयिते मत्तं ममेदं मनः
पत्त्राली तव कुङ्कुमेन रचिता रक्ता वयं मानिनि ।
त्वं तुङ्गस्तनभारमन्थरगतिर्गात्रेषु मे वेपथु-
स्त्वन्मध्ये तनुता ममाधृतिरहो मारस्य चित्रा गतिः ॥'

---

१. 'धर्मस्य' ख. २. 'संभावस्य' ख. ३. 'तदा' ख. ४. 'वेति' क. ५. 'मनः' ख, 'मम' ग. ६. 'विरोधाभासत्वं' ग. ७. 'आभासनं' क. ८. 'विरोधः' ख-पुस्तके नास्ति.

यथा वा[1]—

'सा बाला वयमप्रगल्भवचसः[2] सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥'

विरोधाद्विभावनाया भेदं दर्शयितुमाह—

**क्रियाप्रतिषेधे प्रसिद्धतत्फलव्यक्तिर्विभावना ॥ १३ ॥**

क्रियायाः प्रतिषेधे तस्या एव क्रियायाः फलस्य[4] प्रसिद्धस्य[5] व्यक्ति-विभावना । यथा[6]—

'अप्यसज्जनसांगत्ये न वसत्येव वैकृतम् ।
अक्षालितविशुद्धेषु हृदयेषु मनीषिणाम् ॥'

विरोधप्रसङ्गेनानन्वयं दर्शयितुमाह—

**एकस्योपमेयत्वोपमानत्वेऽनन्वयः ॥ १४ ॥**

एकस्यैवार्थस्योपमेयत्वमुपमानत्वं चानन्वयः । यथा—

'गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥'

अनन्यसादृश्यमेतेन प्रतिपादितम् ।

**क्रमेणोपमेयोपमा ॥ १५ ॥**

एकस्यैवार्थस्योपमेयत्वमुपमानत्वं च क्रमेणोपमेयोपमा । यथा—

'खमिव जलं जलमिव खं हंस इव शशी शशीव हंसोऽयम् ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥'

इयमेव परिवृत्तिरित्येके । तन्निरासार्थमाह—

**समविसदृशाभ्यां परिवर्तनं परिवृत्तिः ॥ १६ ॥**

---

१. 'यथा वा' ग-पुस्तके नास्ति. २. अयं श्लोकः क-पुस्तके नास्ति. ३. 'मनसः' ख-ग. ४. 'फलस्य' ग. ५. 'सिद्धस्य' क. ६. 'यथा' ख-पुस्तके नास्ति. ७. 'उपमानोपमेयत्वे' क, 'उपमेयत्वमुपमानत्वं च' ग. ८. 'वा' क. ९. ख-पुस्तके पूर्वोत्तरार्धयोर्व्यत्ययः. क-पुस्तके पूर्वार्धं नास्ति. १०. 'प्रतिपद्यते' क-ग. ११. 'एकस्योपमेयत्वे उपमानत्वे क्रमेण' क. १२. 'शशाङ्क इव हंसः' क-ग.

समेन विसदृशेन वार्थेनार्थस्य परिवर्तनं परिवृत्तिः । यथा—

'आदाय कर्णकिसलयमियमस्मै चरणमरुणमर्पयति ।
उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये ॥'

यथा वा—

'विहाय सा हारमहार्यनिश्चया विलोलदृष्टिः प्रविलुप्तचन्दना ।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥'

उपमेयोपमायाः क्रमो भिन्न इति दर्शयितुमाह—

**उपमेयोपमानानां क्रमसंबन्धः क्रमः ॥ १७ ॥**

उपमेयानामुपमानानां चोद्देशिनामनुद्देशिनां च क्रमेण संबन्धः क्रमः । यथा—

'तस्याः प्रवृद्धलीलाभिरालापस्मितदृष्टिभिः ।
जीयन्ते वल्लकीकुन्दकुसुमेन्दीवरस्रजः ॥'

संबन्धप्रसङ्गेनैव दीपकं दर्शयितुमाह—

**उपमानोपमेयवाक्येष्वेका क्रिया दीपकम् ॥ १८ ॥**

उपमानवाक्येषूपमेयवाक्येषु चैका क्रिया अनुषङ्गतः संबध्यमाना दीपकम् ।

**तत्त्रिविधम् । आदिमध्यान्तवाक्यवृत्तिभेदात् ॥ १९ ॥**

तत्त्रिविधं भवति । आदिमध्यान्तेषु वाक्येषु वृत्तेर्भेदात् । यथा—

'मथ्यन्ते प्रमदवनानि बालपुष्पैः कामिन्यो मधुमदमांसलैर्विलासैः ।
ब्रह्माणः श्रुतिगदितैः क्रियाकलापै राजानो विरलितवैरिभिः प्रतापैः ॥'

'बाष्पः पथिककान्तानां जलं जलमुचां मुहुः ।
विगलत्यधुना दण्डयात्रोद्योगो महाभुजाम् ॥'

---

१. 'अर्थेन चार्थस्य' ग. २. 'अस्मादनुचरणमर्थयति केला' क, 'अस्मादिह चरणमर्पयति बाला' ग. ३. 'यष्टिः' क-ग. ४. 'प्रवुद्ध' क. ५. 'लक्षयितुं' क. ६. 'उपमानोपमेयादि' क. ७. 'तत्रैविध्यम्' क. ८. 'तत्रिधा' क. ९. 'वृत्तिभेदात्' क.

'गुरुशुश्रूषया बुद्धिर्मधुगोष्ठ्या मनोभवः ।
उदयेन शशाङ्कस्य पयोराशिर्विवर्धते ॥'

दीपकवन्निदर्शनमपि संक्षिप्तमित्याह—

**क्रिययैव स्वतदर्थान्वयख्यापनं निदर्शनम् ॥ २० ॥**

क्रिययैव शुद्धया स्वस्यात्मनस्तदर्थस्य चान्वयस्य संबन्धस्य ख्यापनं संवेलितहेतुदृष्टान्तविभागं निदर्शनम् । यथा—

'अत्युच्चपदाध्यासः पतनायेत्यर्थशालिनां शंसत् ।
आपाण्डु पतति पत्रं तरोरिदं बन्धनग्रन्थेः ॥'

पततीति क्रिया । तस्याः स्वं पतनम् । तदर्थोऽत्युच्चपदाध्यासः पतनायेति शंसनम् । तस्य ख्यापनमर्थशालिनां शंसादिति ।

इदं च नार्थान्तरन्यासः । स ह्यन्यथाभूतः । तमाह—

**उक्तसिद्धौ वस्तुनोऽर्थान्तरस्यैव न्यसनमर्थान्तरन्यासः ॥ २१ ॥**

उक्तसिद्धौ उक्तस्यार्थस्य सिद्ध्यर्थं वस्तुनो वाक्यार्थान्तरस्यैव न्यसनमर्थान्तरन्यासः । वस्तुग्रहणादर्थस्य हेतोर्न्यसनं नार्थान्तरन्यासः । 'इह नातिदूरगोचरमस्ति सरः । कमलसौगन्ध्यात्' इति । अर्थान्तरस्यैवेति वचनम्, यत्र हेतुर्व्याप्तिगूढत्वात्कथंचित्प्रतीयते तत्र यथा स्यात् । 'यद्यत्कृतकं तत्तदनित्यम्' इत्येवंप्रायेषु मा भूदिति । उदाहरणम्—

'प्रियेण संग्रथ्य विपक्षसंनिधावुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥'

अर्थान्तरन्यासस्य हेतुरूपत्वात् हेतोश्चान्वयव्यतिरेकात्मकत्वात् न पृथग्व्यतिरेक इति केचित् । तन्निरासार्थमाह—

**उपमेयस्य गुणातिरेकत्वं व्यतिरेकः ॥ २२ ॥**

१. 'पयोधिरभिवर्धते' क. २. 'संलुलितहेतु' क, 'संबुद्धिहेतु' ख. ३. 'श्लासनम्' क-ग-पुस्तकयोर्नास्ति. ४. 'वाक्यार्थस्यार्थान्तरस्यैव' क. ५. 'पदार्थस्य' क. ६. 'हेतुप्राप्तिगूढत्वात्' क, 'हेतुर्व्याप्तिरूढत्वात्' ख. ७. 'तत्रोदाहरणम्' क. ८. 'पीवरस्तनी' क.

उपमेयस्य गुणातिरेकत्वं गुणाधिक्यं यत् अर्थादुपमानात् स व्यतिरेकः ।
यथा—

'सत्यं हरिणशावाक्ष्याः प्रसन्नसुभगं मुखम् ।
समानं शशिनः किं तु स कलङ्कविडम्बितः ॥'

कश्चित्तु गम्यमानगुणो व्यतिरेकः । यथा—

'कुवलयवनं प्रत्याख्यातं नवं मधु निन्दितं
हसितममृतं भग्नं स्वादोः पदं रससंपदः ।
विषमुपहितं चिन्ताव्याजान्मनस्यपि कामिनां
चतुरमधुरैर्लीलातन्त्रैस्तवार्धविलोकितैः ॥'

व्यतिरेकाद्विशेषोक्तेर्भेदं दर्शयितुमाह—

**एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः ॥ २३ ॥**

एकस्य गुणस्य हानेः कल्पनायां शेषैर्गुणैः साम्यं यत्तस्य दार्ढ्यं विशेषोक्तिः । रूपकं चेदं प्रायेणेति ।

यथा—

'भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ।'
'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् ।'
'निद्रेयमकमला लक्ष्मीः ।'
'हस्ती हि जङ्गमं दुर्गम् ।' इति ।

अत्रापि जङ्गमशब्दस्य स्थावरत्वनिवृत्तिप्रतिपादनत्वादेकगुणहानिकल्पनैव । एतेन—

'वेश्या हि नाम मूर्तिमत्येव निकृतिः ।'
'व्यसनं हि नाम सोच्छ्वासं मरणम् ।'
'द्विजो भूमिबृहस्पतिः ।'

इत्येवमादिष्वेकगुणहानिकल्पना व्याख्याता ।

१. 'गुणातिरिक्तत्वं यत्' क. २. 'चतुरचतुरै लीलारम्भैः' ग. ३. 'यत्र तस्य' ख. ४. 'कापुरुषस्य' ग. ५. 'राज्यमिति' ग. ६. 'निद्रा' ख-ग-पुस्तकयोर्नास्ति. ७. 'लक्ष्मीरिति' ग. ८. 'नाम' क-ग-पुस्तकयोर्नास्ति.

व्यतिरेकविशेषोक्तिभ्यां व्याजस्तुतिं भिन्नां दर्शयितुमाह—

**संभाव्यविशिष्टकर्माकरणान्निन्दास्तोत्रार्था व्याजस्तुतिः ॥ २४ ॥**

अत्यन्तगुणाधिको विशिष्टस्तस्य च कर्म विशिष्टकर्म तस्य संभाव्यस्य कर्तुं शक्यस्याकरणान्निन्दा विशिष्टसाम्यसंपादनेन स्तोत्रार्था[1] व्याजस्तुतिः। यथा—

'बबन्ध सिन्धुं गिरिचक्रवालैर्बिभेद सप्तैकशरेण तालान्।
एवंविधं कर्म ततान रामस्त्वया कृतं तन्न मुधैव गर्वः॥'

व्याजस्तुतेर्व्याजोक्तिं भिन्नां दर्शयितुमाह—

**व्याजस्य सत्यसारूप्यं व्याजोक्तिः ॥ २५ ॥**

व्याजस्य च्छद्मनः सत्येन सारूप्यं व्याजोक्तिः। यां मायोक्तिरित्याहुः। यथा—

'शरच्चन्द्रांशुगौरेण वाताविद्धेन भामिनि।
काशपुष्पलवेनेदं साश्रुपातं मुखं कृतम्॥'

व्याजस्तुतेः पृथक्तुल्ययोगितेत्याह—

**विशिष्टेन साम्यार्थमेककालक्रियायोगस्तुल्ययोगिता ॥ २६ ॥**

विशिष्टेन न्यूनस्य साम्यार्थमेककालायां क्रियायां योगस्तुल्ययोगिता। यथा—

'जलनिधिरशनामिमां धरित्रीं वहति भुजंगविभुर्भवद्भुजश्च।'

**उपमानाक्षेपश्चाक्षेपः ॥ २७ ॥**

उपमानस्याक्षेपः प्रतिषेध उपमानाक्षेपः। तुल्यकार्यार्थस्य नैरर्थक्यविवक्षायाम्। यथा—

'तस्याश्चेन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ च यदि चेत्किं नाम नीलोत्पलैः।
किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे
हा धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः॥'

१. 'स्तोत्रार्थं' ख. २. 'साम्योपादानेन' क, 'साम्यापादनेन' ग. ३. 'स्तोत्रार्थं' ख. ४. 'मायोक्तिं' ख. ५. 'भाविनि' ग. ६. 'एककालक्रियायोगः एककालायां' क. ७. '[illegible]' ग. ८. 'नैरर्थ्यविवक्षायामाक्षेपः' ग. ९. 'ह्रीधातुः' क, 'ही धातः' ग.

उपमानस्याक्षेपतः प्रतिपत्तिरित्यपि सूत्रार्थः। यथा—

'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार॥'

अत्र शरद्वेश्येव, इन्दुं नायकमिव, रवेः प्रतिनायकस्येवेत्युपमानानि गम्यन्त इति।

तुल्ययोगितायाः सहोक्तेर्भेदमाह—

**वस्तुद्वयक्रिययोस्तुल्यकालयोरेकपदाभिधानं सहोक्तिः॥ २८॥**

वस्तुद्वयस्य क्रिययोस्तुल्यकालयोरेकेन पदेनाभिधानं सहार्थशब्दसामर्थ्यात्सहोक्तिः। यथा—

'अस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि।'

अत्रार्थयोर्न्यूनत्वविशिष्टत्वे न स्त इति नेयं तुल्ययोगितेति।

समाहितमेकमवशिष्यते तल्लक्षणार्थमाह—

**यत्सादृश्यं तत्संपत्तिः समाहितम्॥ २९॥**

यस्य वस्तुनः सादृश्यं गृह्यते तस्य वस्तुनः संपत्तिः समाहितम्। यथा—

'तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा।
चिन्तामोहमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा॥'

अत्र पुरूरवसो लतायामुर्वश्याः सादृश्यं गृह्णतः सैव लतोर्वशी संपन्नेति।

एते चालंकाराः शुद्धा मिश्राश्च प्रयोक्तव्या इति विशिष्टानामलंकाराणां मिश्रत्वं संसृष्टिरित्याह—

**अलंकारस्यालंकारयोगित्वं संसृष्टिः॥ ३०॥**

अलंकारस्यालंकारयोगित्वं यदसौ संसृष्टिरिति। संसृष्टिः संसर्गः संबन्ध इति।

१. 'तंतान' ख. २. 'द्वयक्रिययोः' ख. ३. 'न स्त इति न तुल्य' ख, 'न इति नेयं तुल्य' ग. ४. 'तत्र लक्षणार्थं' क. ५. 'गृह्णानस्य' क. ६. 'यत्तदसौ' ग. ७. 'इति' क-ग-पुस्तकयोर्नास्ति.

**तद्भेदावुपमारूपकोत्प्रेक्षावयवौ ॥ ३१ ॥**

तस्याः संसृष्टेर्भेदावुपमारूपकं चोत्प्रेक्षावयवश्चेति । उपमाजन्यं रूपकमुपमारूपकमिति । यथा—

'निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इव भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥'

एवं 'रजनिपुरंध्रिरोध्रतिलकः' इत्येवमादयस्तद्भेदा द्रष्टव्याः ।

**उत्प्रेक्षाहेतुरुत्प्रेक्षावयवः ॥ ३२ ॥**

उत्प्रेक्षाया हेतुरलंकार उत्प्रेक्षावयवः । अवयवशब्दो ह्यारम्भकं लक्षयति । यथा—

'अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥'

एभिर्निदर्शनैः स्वीयैः परकीयैश्च पुष्कलैः ।
शब्दवैचित्र्यगर्भेयमुपमैव प्रपञ्चिता ॥
अलंकारैकदेशा ये मताः सौभाग्यभागिनः ।
तेऽप्यलंकारदेशीया योजनीयाः कवीश्वरैः ॥

इति काव्यालंकारसूत्रवृत्तावालंकारिके चतुर्थेऽधिकरणे तृतीयोऽध्यायः ।
उपमाप्रपञ्चाधिकारः ।

**समाप्तं चेदमालंकारिकं चतुर्थमधिकरणम् ।**

**प्रायोगिकं नाम पञ्चममधिकरणम् ।**

प्रथमोऽध्यायः ।

संप्रति काव्यसमयं शब्दशुद्धिं च दर्शयितुं प्रायोगिकाख्यमधिकरणमारभ्यते । तत्र काव्यसमयस्तावदुच्यते—

**नैकं पदं द्विः प्रयोज्यं प्रायेण ॥ १ ॥**

१. 'इह' ख. २. 'रजनिचरपुरंध्रि' क. ३. 'लोकतिलकः शशी' ग. ४. 'द्रष्टव्या इति' ख. ५. 'अलंकारः' ख-पुस्तके नास्ति. ६. 'ऽस्या रूपकं सूचयति' ख. ७. 'अत्रैभिर्लक्षणैः स्वीयैः' ख. ८. 'बहुवैचित्र्य' ख. ९. 'सौभाग्यशालिनः' क. १०. 'आलंकारिकाधिकरणेऽर्थालंकारकथनं' ग. ११. 'उपमाप्रपञ्चाधिकारः' क-ग-पुस्तकयोर्नास्ति. १२. 'प्रायोगिकार्थमधिकरणमाह' ग. १३. 'उच्यत इत्याह' क.

एकं पदं न द्विः प्रयोज्यं प्रायेण बाहुल्येन । यथा—'पयोद पयोद' इति । किंचिद्दिवादिपदं द्विरपि प्रयोक्तव्यमिति । यथा—'सन्तः सन्तः खलाः खलाः ।'

**नित्यं संहितैकपदवत्पादेष्वर्धान्तवर्जम् ॥ २ ॥**

नित्यं संहिता पादेष्वेकपदवदेकस्मिन्निव पदे । तत्र हि नित्या संहितेत्याम्नायः । यथा—'संहितैकपदे नित्या नित्या धातूपसर्गयोः' इति । अर्धान्तवर्जमर्धान्तं वर्जयित्वा ।

**न पादान्तलघोर्गुरुत्वं च सर्वत्र ॥ ३ ॥**

पादान्तलघोर्गुरुत्वं प्रयोक्तव्यं न सर्वत्र न सर्वस्मिन्वृत्ते इति । यथा—

'यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥'

एवंप्रायेष्वेव वृत्तेष्विति । न पुनः

'वरूथिनीनां रजसि प्रसर्पति समस्तमासीद्धिनिमीलितं जगत् ।'

इत्यादिषु । चकारोऽर्धान्तवर्जमित्यस्यानुकर्षणार्थः ।

**न गद्ये समासप्रायं वृत्तमन्यत्रोद्धतादिभ्यः संवादात् ॥ ४ ॥**

गद्ये समासप्रायं वृत्तं न विधेयम् । शोभाभ्रंशात् । अन्यत्रोद्धतादिभ्यो विषमवृत्तेभ्यः । संवादात् गद्येनेति ।

**न पादादौ खल्वादयः ॥ ५ ॥**

पादादौ खल्वादयः शब्दा न प्रयोज्याः । आदिशब्दः प्रकारार्थः । येषामादौ प्रयोगो न श्लिष्यति ते गृह्यन्ते । न पुनर्वतहन्तप्रभृतयः ।

**नार्धे किंचिदसमासप्रायं वाक्यम् ॥ ६ ॥**

---

१. 'प्रयोक्तव्यं' ख. २. 'दिवादि' क-ख. ३. 'इति दर्शयति' क-ख. ४. 'समासप्रायं' ख. ५. 'समासप्रायं' ख.

वृत्तस्यार्धे किंचिदसमाप्तप्रायं न प्रयोक्तव्यम् । यथा—

'जयन्ति ताण्डवे शंभोर्भङ्गुराङ्गुलिकोटयः ।
कराः कृष्णस्य च भुजाश्चक्रांशुकपिशत्विषः ॥'

**न कर्मधारयो बहुव्रीहिप्रतिपत्तिकरः ॥ ७ ॥**

बहुव्रीहिप्रतिपत्तिं करोति यः कर्मधारयः स न प्रयोक्तव्यः । यथा—'अध्यासितश्चासौ तरुश्चाध्यासिततरुः' इति ।

**तेन विपर्ययो व्याख्यातः ॥ ८ ॥**

बहुव्रीहिरपि कर्मधारयप्रतिपत्तिकरो न प्रयोक्तव्यः । यथा—'वीराः पुरुषा यस्य स वीरपुरुषः' । 'कलो रवो यस्य स कलरवः ।' इति ।

**संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ ॥ ९ ॥**

संभाव्यस्य निषेधस्य निवर्तने द्वौ प्रतिषेधौ प्रयोक्तव्यौ । यथा—

'समरमूर्धनि येन तरस्विना न न जितो विजयी त्रिदशेश्वरः ।
स खलु तापसबाणपरम्पराकवलितक्षतजः क्षितिमाश्रितः ॥'

**विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ ॥ १० ॥**

विशेष्यस्य प्रतिपत्तौ जातायां विशेषणमात्रस्यैव प्रयोगः । यथा—'निधानगर्भामिव सागराम्बराम् ।' अत्र हि पृथिव्या विशेषणमात्रमेव प्रत्युक्तम् । एतेन

'क्रुद्धस्य तस्याथ पुरामरातेर्ललाटपट्टादुदगादुदर्चिः ।'
'गिरिस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः ।'

इत्यादयः प्रयोगा व्याख्याताः ।

**सर्वनाम्नानुसंधिर्वृत्तिच्छन्नस्य ॥ ११ ॥**

सर्वनाम्नानुसंधिरनुसंधानं प्रत्यवमर्शः । वृत्तिच्छन्नस्य वृत्तौ समासे छन्नस्य गुणीभूतस्य । यथा—

---

१. 'असमाप्तं वाक्यं न विधेयं प्रयोक्तव्यम्' क, 'ऽसमासप्रायं वाक्यं न प्रयोज्यम्' ग २. 'चक्राङ्क' ख. ३. 'विप्रतिपत्ति' क. ४. 'विप्रतिपत्तिं' क. ५. 'विप्रतिपत्ति' क. ६. 'निषेधौ' क. ७. 'यशस्विना' क. ८. 'एव' क-पुस्तके नास्ति. ९. 'गिरिस्तडित्वानित्यादयः' क-ग.

'तवापि नीलोत्पलपत्रचक्षुषो मुखस्य तद्रेणुसमानगन्धिनः' इति ।

**संबन्धसंबन्धेऽपि षष्ठी क्वचित् ॥ १२ ॥**

संबन्धेन संबन्धः संबन्धसंबन्धस्तस्मिन् षष्ठी प्रयोज्या क्वचित्, न सर्वत्रेति । यथा—'कमलस्य कन्दः' इति । कमलेन संबद्धा कमलिनी[1] नलिनी तस्याः कन्द इति संबन्धसंबन्धः । तेन कदली[2]काण्डादयो[3] व्याख्याताः ।

**अतिप्रयुक्तं देशभाषापदम् ॥ १३ ॥**

अतीव कविभिः प्रयुक्तं देशभाषापदं प्रयोज्यम् । यथा—'योषिदित्यभिललाष न हालां' इत्यत्र हालेति देशभाषापदम् । अनतिप्रयुक्तं तु न प्रयोज्यम् । यथा—'कङ्केली[4]काननालीरविरलविलसत्पल्लवा नर्तयन्तः[5]' इत्यत्र कङ्केली[6]पदम् ।

**लिङ्गाध्याहारौ ॥ १४ ॥**

लिङ्गं चाध्याहारश्च लिङ्गाध्याहारावतिप्रयुक्तौ प्रयोज्याविति[7] । यथा—'वत्से मा बहु निःश्वसीः कुरु सुरागण्डूषमेकं शनैः' इत्यादिषु गण्डूषशब्दः पुंसि भूयसा प्रयुक्तः, न स्त्रियामाम्नातोऽपि स्त्रीत्वे ।

अध्याहारो यथा—

'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा[8] ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥'

अत्र ह्यधाक्षीदित्यादीनामध्याहारो[9]ऽयं प्रयुक्तः[10] ।

**लक्षणाशब्दाश्च ॥ १५ ॥**

लक्षणाशब्दाश्चातिप्रयुक्ताः प्रयोज्याः । यथा द्विरेफ[11]रथचरणशब्दौ

---

१. 'कमलिनी' ख-ग-पुस्तकयोर्नास्ति. २. 'कमल' ख, 'कदल' ग. ३. 'दयोऽपि' ख. ४. 'कङ्केल्ली' ख. ५. 'नर्तयान्ति' क, 'नर्तयन्ते' ग. ६. 'कङ्केल्ली' ख. ७. 'इति' क-ग-पुस्तकयोर्नास्ति. ८. 'वज्रमिन्द्रकरविप्रसृतं वा' क-ग. ९. 'क्रियापदानामध्याहारो' ग. १०. 'अयं प्रयुक्त इति' ख, 'उत्पन्नप्रयुक्ततया युक्त इति' ग. ११. 'द्विरेफरोदरशब्दौ' क-ग.

भ्रमरचक्रवाकार्थौ लक्षणापरौ। अनतिप्रयुक्ताश्च न प्रयोक्तव्याः[1]। यथा—द्विकः काक इति।

**न तद्बाहुल्यमेकत्र ॥ १६ ॥**

तेषां लक्षणाशब्दानां बाहुल्यमेकस्मिन्वाक्ये न प्रयोक्तव्यम्। शक्यते[2] ह्येकस्यावाचकस्य वाचकवद्भावः कर्तुम्, न बहूनामिति।

**स्तनादीनां द्वित्वाविष्टा जातिः प्रायेण ॥ १७ ॥**

स्तनादीनां द्वित्वाविष्टा द्वित्वाध्यासिता जातिः प्रायेण बाहुल्येनेति[3]। यथा—'स्तनयोः स्तरुणीजनस्य—' इति। प्रायेणेति वचनात्क्वचिन्न भवति। यथा—'स्त्रीणां चक्षुः' इति। अथ कथं द्वित्वाविष्टत्वं जातेः। तद्धि द्रव्ये, न जातौ। अतद्रूपत्वाज्जातेः। न दोषः। तदतद्रूपत्वाज्जातेः[4]। कथं तदतद्रूपत्वं जातेः। तद्धि[6] जैमिनीया जानन्ति। वयं तु लक्ष्यसिद्धौ सिद्धपरमतानुवादिनः। न चैवमतिप्रसङ्गः। लक्ष्यानुसारित्वाद्न्यायस्येति[7]। एवमन्यापि व्यवस्थोह्या[8]।

इति काव्यालंकारसूत्रवृत्तौ प्रायोगिके पञ्चमेऽधिकरणे प्रथमोऽध्यायः।

काव्यसमयः।

---

द्वितीयोऽध्यायः।

सांप्रतं शब्दशुद्धिरुच्यते[9]—

**रुद्रावित्येकशेषोऽन्वेष्यः ॥ १ ॥**

रुद्रावित्यत्र प्रयोगे एकशेषोऽन्वेष्योऽन्वेषणीयः। रुद्रश्च रुद्राणी चेति 'पुमान्स्त्रिया' इत्येकशेषः। स च न प्राप्नोति। तत्र हि 'तल्लक्षणश्चेदेव विशेषः' इत्यनुवर्तत इति[10] तत्रैवकारकरणात् स्त्रीपुंसकृत एव विशेषो भव-

---

१. 'प्रयोज्याः' क. २. 'वाक्ये तर्ह्येकस्या—कर्तुं शक्यो न' ख, 'शक्येन ह्येकस्य वाचकवद्भावो न' क. ३. 'इति' ख-पुस्तके नास्ति. ४. 'तस्याः' क-ग. ५. 'तद्रूप' क. ६. 'तद्धि' क-ग-पुस्तकयोर्नास्ति. ७. 'इति' ख-पुस्तके नास्ति. ८. 'व्यवस्थाप्यूह्या' ख-ग. ९. 'शुद्धिरुच्यते इत्याह' ख, 'शुद्ध्येत्यत आह' ग. १०. 'इति' ख-पुस्तके नास्ति.

तीति व्यवस्थितम्। अत्र तु 'पुंयोगादाख्यायाम्' इति विशेषान्तरमप्यस्तीति। एतेनेन्द्रौ भवौ शर्वौ[1]वित्यादयः प्रयोगाः [2]प्रत्युक्ताः।

**[3]मिलिक्लविक्षपिप्रभृतीनां धातुत्वम्। धातुगणस्यासमाप्तेः॥ २॥**

मिलतिवि[4]क्लवतिक्षपयतीत्यादयः प्रयोगाः। तत्र मिलिक्लविक्षपिप्रभृतीनां कथं धातुत्वम्। गणपाठात् गणपठितानामेव धातुसंज्ञाविधानात्। त[5]त्राह—[6]धातुगणस्यासमाप्तेः। वर्धते धातुगण इति हि शब्दविद आचक्षते। तेनैषां गणपाठोऽनुमतः शिष्टप्रयोगादिति।

**[7]वलेरात्मपदमनित्यं [8]ज्ञापकात्॥ ३॥**

[9]वलेरनुदात्तेत्वादात्मनेपदं यत्तदनित्यं दृश्यते 'लज्जालोलं [10]वलन्ती' इत्यादि [11]प्रयोगेषु। तत्कथमित्याह—[12]ज्ञापकात्।

किं पुनस्त[13]ज्ज्ञापकम[14]त आह—

**चक्षिङो [15]ङनुबन्धकरणम्॥ ४॥**

चक्षिङ इकारे[16]णैवानुदात्तेन सिद्धमात्मनेपदं किमर्थं ङित्करणम्। [17]यत्क्रियते अनुदात्तनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम्। [18]एतेन वेदि-भर्त्सि-तर्जिप्रभृतयो व्याख्याताः। आवेदयति-भर्त्सयति-तर्जयतीत्यादीनां प्रयोगाणां दर्शनात्। [19]अन्यत्राप्यनुदात्तनिबन्धनस्यात्मनेपदस्यानित्यत्वं ज्ञापकेन द्रष्टव्यमिति।

**क्षीयत इति कर्मकर्तरि॥ ५॥**

क्षीयत इति प्रयोगो दृश्यते [20]स कर्मकर्तरि द्रष्टव्यः। [21]क्षीयतेरनात्मनेपदित्वात्।

---

१. 'शर्वौ' ख-पुस्तके नास्ति. २. 'प्रयुक्ताः' क. ३. 'मिलिविक्लविक्षपयति' क, 'मिलिविक्लविक्षपि' ग. ४. 'विक्लवते' क. ५. 'अत आह' क-ग. ६. 'धातुसंज्ञागणस्यापरिसमाप्तेः' ग. ७. 'चलेः' ख. ८. 'ज्ञापकत्वात्' ग. ९. 'चलेः' ख. १०. 'चलतीत्यादि' ख. ११. 'पदेषु' ग. १२. 'ज्ञापकत्वात्' ग. १३. 'ज्ञापकत्वं' ग. १४. 'अत आह' क-ग-पुस्तकयोर्नास्ति. १५. 'अनुबन्ध' ख. १६. 'अनुदात्तत्वेनात्मनेपदं सिद्धं' क. १७. 'तत्' ख. १८. 'तेन विदि' क, 'एतेनावेदितभर्त्सिततर्जितप्रभृतयो' ग. १९. 'अत्रापि' क-ख. २०. 'यः स' ख. २१. 'क्षयतेः' ख, 'क्षियोरात्मने' ग.

**स्विद्यत इति च ॥ ६ ॥**

स्विद्यत[1] इति च प्रयोगो दृश्यते सोऽपि कर्मकर्तर्येव द्रष्टव्यः, न कर्तरि । अदैवादिकत्वात्स्विदेः ।

**मार्गेरात्मनेपदमलक्ष्म ॥ ७ ॥**

चुरादौ 'मार्ग अन्वेषणे' इति पठ्यते 'आ धृषाद्वा' इति विकल्पितणिच्कः तस्माद्यदात्मनेपदं दृश्यते—'मार्गन्तां देहभारं[3]–' इति तदलक्ष्म अलक्षणम् । परस्मैपदित्वान्मार्गेः । तथा[4] च शिष्टप्रयोगः—'करकिसलयं धूत्वा[5] धूत्वा विमार्गति वाससी ।'

**लोलमानादयश्चानशि ॥ ८ ॥**

लोलमानो वेल्लमान इत्यादयश्चानशि द्रष्टव्याः । शानचस्त्वभावः । परस्मैपदित्वाद्धातूनामिति ।

**लभेर्गत्यर्थत्वाण्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे ॥ ९ ॥**

अस्त्ययं लभिर्यः प्राप्त्युपसर्जनां गतिमाह, अस्ति च[6] गत्युपसर्जनां प्राप्तिमाहेति । अत्र पूर्वस्मिन्पक्षे गत्यर्थत्वाल्लभेर्णिच्यणौ यः कर्ता तस्य गत्यादिसूत्रेण कर्मसंज्ञा । यथा—

'दीर्घिकासु कुमुदानि विकासं लम्भयन्ति शिशिराः शशिभासः ।'

द्वितीयपक्षे गत्यर्थाल्लभेर्णिच्यणौ कर्तुर्न कर्मसंज्ञा । यथा—

'सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः ॥'

**ते-मे-शब्दौ निपातेषु ॥ १० ॥**

त्वयामयेत्यस्मिन्नर्थे ते-मे-शब्दौ निपातेषु द्रष्टव्यौ । यथा—

'श्रुतं ते वचनं तस्य', 'वेदानधीत इति नाधिगतं पुरा मे' ।

**तिरस्कृत इति परिभूतेऽन्तर्ध्युपचारात् ॥ ११ ॥**

तिरस्कृत इतिशब्दः परिभूते दृश्यते । 'राज्ञा तिरस्कृतः' इति । स

१. 'खिद्यत इत्यपि च' क, 'भिद्यते' ग. २. 'खिद्यते' क, 'भिद्यते' ग. ३. 'देहभावं' क, 'देहसारान्' ग. ४. 'तथायं' क. ५. 'धुत्वा धुत्वा' ग. ६. 'च' क-ग-पुस्तकयोर्नास्ति.

च न प्राप्नोति । तिरःशब्दस्य हि 'तिरोऽन्तर्धौ' इत्यन्तर्धौ गतिसंज्ञा । तस्यां च सत्यां 'तिरसोऽन्यतरस्याम्' इति सकारः । तत्कथं तिरस्कृत इति परिभूते । आह—अन्तर्ध्युपचारादिति । परिभूतो ह्यन्तर्हितवद्भवति । मुख्यस्तु प्रयोगो यथा—'लावण्यप्रसरतिरस्कृताङ्गलेखां' इति ।

**नैकशब्दः सुप्सुपेतिसमासात् ॥ १२ ॥**

'अरण्यानीस्थानं फलनमितनैकद्रुममिदं[1]' इत्यादिषु नैकशब्दो दृश्यते स च न[2] सिद्ध्यति । नञ्समासे 'नलोपो नञः' इति नलोपे 'तस्मान्नुडचि' इति नुडागमे सत्यनेकमिति रूपं स्यात् । निरनुबन्धस्य नशब्दस्य समासलक्षणं नास्ति । तत्कथं नैकशब्द इत्याह—सुप्सुपेति समासात् ।

**मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु[3] पाठात् ॥ १३ ॥**

'मधुपिपासुमधुव्रतसेवितं मुकुलजालमजृम्भत वीरुधाम्' इत्यादिषु मधुपिपासुप्रभृतीनां समासो गमिगाम्यादिषु पिपासुप्रभृतीनां पाठात् । श्रितादिषु गमिगाम्यादीनाम् इति द्वितीयासमासलक्षणं दर्शयति ।

**त्रिवलीशब्दः सिद्धः संज्ञाचेत् ॥ १४ ॥**

त्रिवलीत्ययं शब्दः सिद्धो यदि संज्ञा । 'दिक्संख्ये संज्ञायाम्' इति संज्ञायामेव समासविधानात् ।

**बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम् ॥ १५ ॥**

'बिम्बाधरः पीयते' इति प्रयोगो दृश्यते । स च न युक्तः । अधरबिम्ब इति भवितव्यम् । 'उपमितं व्याघ्रादिभिः—' इति समासे सति । तत्कथं बिम्बाधर इत्याह—वृत्तौ मध्यमपदलोपिन्यां शाकपार्थिवादित्वात्समासे । मध्यमपदलोपिनि समासे[4] सति बिम्बाकारोऽधरो बिम्बाधर इति । तेन बिम्बौष्ठशब्दोऽपि[5] व्याख्यातः । अत्रापि पूर्ववद्वृत्तिः । शिष्टप्रयोगेषु[6] चैष विधिः । तेन नातिप्रसङ्गः ।

**आमूललोलादिषु वृत्तिर्विस्पष्टपटुवत् ॥ १६ ॥**

---

१. 'इदं' क-पुस्तके नास्ति. २. 'न' ख-पुस्तके नास्ति. ३. 'गम्यादिषु' ख. ४. 'समासे' क-ख-पुस्तकयोर्नास्ति. ५. 'अपि' क-ग-पुस्तकयोर्नास्ति. ६. 'प्रयुक्तेषु' ग.

आमूललोलमामूलसं[1]रलमित्यादिषु वृत्तिर्विस्पष्टपटुवत् । मयूरव्यंसकादित्वात् । लोलमिव लोलम् आमूलं च तल्लोलं चेति ।

**न धान्यषष्ठादिषु षष्ठीसमासप्रतिषेधः । पूरणेनान्यतद्धितान्तत्वात् ॥ १७ ॥**

धान्यषष्ठं 'तान्युञ्छषष्ठाङ्कितसैकतानि' इत्यादिषु न षष्ठीसमासप्रतिषेधः । पूरणेन पूरणप्रत्ययान्तेनान्यतद्धितान्तत्वात् । षष्ठो भागः षष्ठ इति । 'पूरणाद्भागे तीयादन्' 'षष्ठाष्टमाभ्यां ञ च' इत्यन्विधानात्स प्राप्तः ।

**पत्रपीतिमादिषु गुणवचनेन ॥ १८ ॥**

पत्रपीतिमा पं[2]त्रालीपिङ्गलिमा इत्यादिषु षष्ठीसमासप्रतिषेधो गुणवचनेन प्राप्तो बालिश्यात्तु[3] न कृतः ।

**अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः ॥ १९ ॥**

अवर्ज्यो न वर्जनीयो व्यधिकरणो बहुव्रीहिः । जन्माद्युत्तरपदं यस्य स जन्माद्युत्तरपदः । यथा—'शास्त्रार्थजन्मा हि विवेकलाभः', 'कं[4]ण्ठवृत्तयः प्राणाः' इति ।

**हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात् ॥ २० ॥**

हस्ताग्रमग्रहस्तः पुष्पाग्रमग्रपुष्पमित्यादयः प्रयोगाः कथम् । आहिताग्न्यादिष्वपाठात् । पाठे वा तदनियमः स्यात् । आ[5]ह—गुणगुणिनोर्भेदाभेदात् । तं[6]त्र भेदात् हस्ताग्रादयः । अभेदादग्रहस्तादयः ।

**पूं[7]र्वनिपातेऽपभ्रंशो रक्ष्यः[8] ॥ २१ ॥**

काष्ठतृणं तृणकाष्ठमिति यदृच्छया पूर्वनिपातं कुर्वन्ति तत्रापभ्रंशो रक्ष्यो रक्षणीयः । अनित्यत्वज्ञा[9]पनं तु न सर्वविषयमिति ।

**निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः । परिगणनस्य प्रायिकत्वात् ॥ २२ ॥**

---

१. 'सरसं' क. २. 'पक्ष्मालीपिङ्गलिम्ना' ग. ३. 'तु' क-ग-पुस्तकयोर्नास्ति. ४. 'कण्ठे वृत्तयः' ख. ५. 'अत आह' ख. ६. 'तत्र' ख-पुस्तके नास्ति. ७. 'पूर्वनिपातापभ्रंशो' क, 'लध्वक्षरपूर्वनिपातेऽपभ्रंशो वर्ज्यः' ग. ८. 'वर्ज्यः' ग. ९. 'ज्ञापकं' ख.

'अनभिहिते' इत्यत्र सूत्रे तिङ्कृत्तद्धितसमासैरिति परिगणनं कृतं तस्य प्रायिकत्वान्निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिर्भवति । यथा—'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इति । 'पण्डितं मूर्ख इति मन्यते' ।

**शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां[1] सामान्योपक्रमात् ॥ २३ ॥**

शकेः[2] 'शकिसहोश्च' इति कर्मणि यति कृते शक्यमिति रूपं भवति । विलिङ्गवचनस्यापि विरुद्धलिङ्गवचनस्यापि कर्माभिधायां कर्मवचने सामान्योपक्रमात् विशेषानपेक्षायामिति । यथा—

'शक्यमोषधिपतेर्नवोदयाः कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसंपुटैः कराः ॥'

अत्र भाष्यकृद्वचनं लिङ्गम् । यथा—'शक्यं च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्' इति । न चैकान्तिकः सामान्योपक्रमः । तेन[3]—'शक्या भङ्क्तुं झटिति[4] बिसिनीकन्दवच्चन्द्रपादाः' इत्यपि भवति ।

**हानिवदाधिक्यमप्यङ्गानां विकारः ॥ २४ ॥**

'येनाङ्गविकारः' इत्यत्र सूत्रे यथाङ्गानां हानिस्तथाधिक्यमपि वि[5]कारः । यथा—'अक्ष्णा काणः' इति भवति तथा 'मुखेन त्रिलोचनः' इत्यपि भवति ।

**न कृमिकीटानामिति । एकवद्भावप्रसङ्गात् ॥ २५ ॥**

'आयुषः कृमिकीटानामलंकरणमल्पता' इत्यत्र कृमिकीटानामिति प्रयोगो न युक्तः । 'क्षुद्रजन्तवः' इत्येकवद्भावप्रसङ्गात् । न च मध्यमपदलोपी समासो युक्तः । तस्यासर्वविषयत्वात् ।

**न[6], खरोष्ट्रौ । उष्ट्रखरमिति पाठात् ॥ २६ ॥**

---

१. 'कर्माभिधानं' क. २. 'शकेः' इति ख-पुस्तके पूर्वसूत्रे क्षिप्तम्. ३. 'तदाह' क-ख. ४. 'झगिति' क. ५. 'विकाराय' क. ६. ख-पुस्तकेऽस्याग्रिमस्य च सूत्रस्य विपर्ययः.

'खरोष्ट्रौ वाहनं येषाम्' इत्यत्र खरोष्ट्राविति [1]प्रयोगो न युक्तः । गवाश्वप्रभृतिषूष्ट्रखरमिति पाठात् ।

**आसेरसतेः ॥ २७ ॥**

'लावण्यमुत्पाद्य इवास यत्नः' इत्यत्रासेत्यसतेर्धातोः 'अस गतिदीप्त्यादानेषु' इत्यस्य प्रयोगः, नास्तेः । भूभावविधानात् ।

**युध्येदिति युधः क्यचि ॥ २८ ॥**

'यो भर्तृपिण्डस्य कृते न युध्येत्' इति प्रयोगः स चायुक्तः । युधे-[3]रात्मनेपदित्वात् । [4]तत्कथं युध्येदित्याह—युधः क्यचि । युधमात्मन इच्छे-[5][6]द्युध्येदिति ।

**विरलायमानादिषु क्यङ् निरूप्यः ॥ २९ ॥**

'विरलायमाने मलयमारुते' इत्यादिषु क्यङ् निरूप्यः । भृशादिषु [7]पाठात् । नापि क्यष् । लोहितादिष्वपाठात् ।

**अहेतौ हन्तेर्णिच् । [8]चुरादिपाठात् ॥ ३० ॥**

'घातयित्वा दशास्यम्' इत्यत्राहेतौ णिच् दृश्यते स कथमि[9]त्याह—चुरादिपाठात् । चुरादिषु "चट स्फुटभेदे' 'घट संघाते' हन्त्यर्थाश्च" इति पाठात् ।

**अनुचरीति चरेष्टित्वात् ॥ ३१ ॥**

'अनुचरी प्रियतमा मदालसा' इत्यत्रानुचरीति न युक्तः । ईकारलक्षणाभावात् । [10]तत्कथम् । आह—चरेष्टित्वात् । पचादिषु चरडिति [11]पठ्यते ।

**केसरालमित्यलतेरणि ॥ ३२ ॥**

'केसरालं शिलीन्ध्रं' इत्यत्र केसरालमिति कथम् । आह—अलतेरणि । 'अलं भूषणपर्याप्तिवारणेषु' [12]इत्यस्माद्धातोः केसरशब्दे कर्मण्युपपदे 'कर्मण्यण्' इत्यनेनाणि सति केसरालमिति [13]सिद्ध्यति ।

---

१. 'वृषभं चानयेति' ग. २. 'पाठो' ख. ३. 'युध्यते' क-ख. ४. 'तत्' ख-पुस्तके नास्ति. ५. 'इच्छति' क-ख. ६. 'युध्येदिति' क-ख-पुस्तकयोर्नास्ति. ७. अपाठात्' क-ख. ८. 'चुरादिषु' क. ९. 'इत्याह' ग-पुस्तके नास्ति. १०. 'तत्कथम्' क-पुस्तके नास्ति. ११. 'पाठात्' ख. १२. 'इत्यस्मात्पर्यास्यर्थे केसरशब्दे' क. १३. 'सिद्धति' ख-पुस्तके नास्ति.

**पत्रलमिति लातेः के ॥ ३३ ॥**

'पत्रलं वनमिदं विराजते' इत्यत्र पत्रलमिति कथम् । आह—लातेः के । 'ला आदाने' इत्येतस्माद्धातोरादानार्थात् पत्रशब्दे कर्मण्युपपदे 'आतोऽनुपसर्गे कः' इति कप्रत्यये सतीति ।

**महीध्रादयो मूलविभुजादिदर्शनात् ॥ ३४ ॥**

महीध्र[२]धरणीध्रादयः शब्दा मूलविभुजादिदर्शनात्कप्रत्यये सतीति । महीं धरतीति महीध्र इति । एवमादयोऽन्येऽपि द्रष्टव्याः ॥

**ब्रह्मादिषु हन्तेर्नियमादरिहाद्यसिद्धिः ॥ ३५ ॥**

ब्रह्मादिषूपपदेषु हन्तेः क्विब्विधौ 'ब्रह्मभ्रूणवृत्रेषु—' इत्यत्रारिहारिपुहा इत्येवमादीनामसिद्धिः । नियमात् । 'ब्रह्मादिष्वेव, हन्तेरेव, क्विबेव, भूतकाल एवेति चतुर्विधश्चात्र नियमः' इति नियमान्यतराविषयो निरूप्यः ।

**ब्रह्मविदादयः कृ[३]दन्तवृत्त्या ॥ ३६ ॥**

ब्रह्मविद्वृत्रभिदित्यादयः प्र[४]योगा न युक्ताः । 'ब्र[५]ह्मभ्रूण—' इत्यादिषु 'हन्तेरेव' इति नियमात् । आह—कृदन्तवृत्त्या । वेत्तीति वित् । भिनत्तीति भित् । 'क्विप् च' इति क्विप् । ततः कृदन्तैर्विदादिभिः सह ब्रह्मादीनां षष्ठीसमास इति ।

**तैर्महीधरादयो व्याख्याताः ॥ ३७ ॥**

तैर्विदादिभिर्महीधरादयो व्याख्याताः । धरतीति धरः । मह्या धरो महीधरः । एवं गङ्गाधरादयो व्याख्याताः ।

**भिदुरादयः कर्मकर्तरि कर्तरि च ॥ ३८ ॥**

भिदुरं काष्ठम् । भि[६]दुरं तमः । 'तिमिरभिदुरं व्योम्नः शृङ्गं—' इति । छिदुरातपो दिवसः । मत्सरच्छिदुरं प्रेम । भङ्गुरा प्रीतिः । 'मातङ्गं मानभङ्गुरम्' इत्यादयो हि प्रयोगा दृश्यन्ते । कथमित्याह—ते[७] कर्मकर्तरि कर्तरि च भ[८]वन्ति । 'कर्मकर्तरि चायमिष्यते' इत्यत्र हि चकारः कर्तरि चेत्यस्य समुच्चयार्थः ।

---

१. ग-पुस्तकमेतावत्पर्यन्तमस्ति. २. 'धरणीध्रा इत्यादयः' क. ३. 'कृदन्तस्य' क. ४. 'शब्दप्रयोगाः' क. ५. 'ब्रह्मादिषु हन्तेरत्र नियमात्' ख. ६. 'भिदुरं तमः' क-पुस्तके नास्ति. ७. 'ते' क-पुस्तके नास्ति. ८. 'भवन्ति' क-पुस्तके नास्ति.

**गुणविस्तरादयश्चिन्त्याः ॥ ३९ ॥**

गुणविस्तरः [१]व्याक्षेपविस्तरः इत्यादयः प्रयोगाश्चिन्त्याः । 'प्रथने वावशब्दे' इति घञ्प्रसङ्गात् ।

**अवतरावचायशब्दयोर्दीर्घह्रस्वत्वव्यत्यासो बालानाम् ॥ ४० ॥**

अवतरशब्दस्यावचायशब्दस्य च दीर्घत्वह्रस्वत्वयोर्व्यत्यासो बालानां बालिशानां प्रयोगेष्विति । ते [२]ह्यवतरणमवतार इति प्रयुञ्जते । मारुतावतार इति । स ह्ययुक्तः । भावे तरते[३]र्विधानात् । [४]अवचयनमवचय इति प्रयुञ्जते । पुष्पावचय इति । [५]अत्र 'हस्तादाने चेरस्तेये' इति घञ्प्राप्त इति ।

**शोभेतिनिपातनात् ॥ ४१ ॥**

शोभेत्ययं शब्दः साधुः । निपातनात् । 'शुभशुम्भशोभार्थौ' इति शुभेर्भिदादेराकृतिगणत्वाद[६]ङ् सिद्ध एव । गुणप्रतिषेधाभावस्तु निपात्यत इति । शोभार्थावित्यत्रैकदेशे किं शोभा, आहोस्विच्छोभ इति विशेषावगतिराचार्यप[७]रम्परोपदेशादिति ।

**अविधौ गुरोः स्त्रियां बहुलं विवक्षा ॥ ४२ ॥**

अविधावविधाने 'गुरोश्च हलः' इति स्त्रियां बहुलं विवक्षा । क्वचिद्विवक्षा, क्वचिदविवक्षा, क्वचिदुभयमिति । विवक्षा यथा—ईहा लज्जेति । अविवक्षा यथा—आतङ्क इति । विवक्षाविवक्षे यथा—बाधा बाधः, ऊहा ऊहः, व्रीडा व्रीडः, इति ।

**व्यवसितादिषु [८]क्तः कर्तरि चकारात् ॥ ४३ ॥**

व्यवसितः प्रतिपन्न इत्यादिषु भावकर्मविहितोऽपि क्तः कर्तरि । गत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् । भावकर्मानुकर्षणार्थत्वं चकारस्येति चेत्, [९]आवृत्तिः कर्तव्या ।

**आहेति भूतेऽन्यलं[१०]डन्तभ्रमाद् ब्रुवो लटि ॥ ४४ ॥**

'ब्रुवः पञ्चानां—' इत्यादिना आहेति लटचुत्पादितः । स भूते प्र-

---

१. 'व्याक्षेपः' ख. २. 'ह्यवतर अवतारः' क. ३. 'रत्वविधानात्' क. ४. 'अवचायमवचयः' ख. ५. 'अत्र' क-पुस्तके नास्ति. ६. 'दङः सिद्धत्वादेव' ख. ७. 'पारम्पर्योपदेशात्' क. ८. 'कर्तरि क्तः' ख. ९. 'तदावृत्तिः' ख. १०. 'णलन्त' क.

युक्तः । 'इत्याह भगवान्प्रभुः' इति । अन्यस्य भूतकालाभिधायिनो लङन्तस्य[1] लिटि भ्रमात् । निपुणाश्चैवं[2] प्रयुञ्जते—'आह स्म स्मितमधुमधुराक्षरां[3] गिरम्' इति । 'अनुकरोति भगवतो नारायणस्य' इत्यत्रापि मन्ये 'स्म'शब्दः कविना प्रयुक्तो लेखकैस्तु प्रमादान्न[4] लिखित इति ।

**शबलादिभ्यः स्त्रियां टापोऽप्राप्तिः ॥ ४५ ॥**

'उपस्रोतः स्वस्थस्थितमहिषशृङ्गाग्रशबलाः[5]
स्रवन्तीनां जाताः प्रमुदितविहंगास्तटभुवः ।'
'भ्रमरोत्करकल्माषाः कुसुमानां समृद्धयः ।'

इत्यादिषु स्त्रियां टापोऽप्राप्तिः । 'अन्यतो ङीष्' इति ङीष्विधानात् । तेन[6] शबली कल्माषीति भवति ।

**प्राणिनि नीलेति चिन्त्यम् ॥ ४६ ॥**

'कुवलयदलनीला कोकिला बालचूते' इत्यादिषु नीलेति चिन्त्यम् । कोकिला नीलीति भवितव्यम् । नीलशब्दात् 'जानपद—' इत्यादि सूत्रेण 'प्राणिनि च' इति ङीष्विधानात् ।

**मनुष्यजातेर्विवक्षाविवक्षे ॥ ४७ ॥**

'इतो मनुष्यजातेः', 'ऊङुतः' इत्यत्र[7] मनुष्यजातेर्विवक्षा अविवक्षा च लक्ष्यानुसारतः ।

'मन्दरस्य मदिराक्षि पार्श्वतो निम्ननाभि न भवन्ति निम्नगाः ।
यासु वासुकिविकर्षणोद्भवा[8] भामिनीह पदवी विभाव्यते ॥'

अत्र मनुष्यजातेर्विवक्षायां 'इतो मनुष्यजातेः' इति ङीषि सति 'अम्बार्थनद्योर्ह्रस्वः' इति संबुद्धौ[9] ह्रस्वत्वं सिद्ध्यति । नाभिशब्दात्पुनः 'इतश्च प्राण्यङ्गात्' इतीकारे कृते[10] निम्ननाभीकेति स्यात् ।

'हृतोष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम्[11] ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥'

---

१. 'णलन्तस्य' क. २. 'त्वेवं' ख. ३. 'मधुमज्जदक्षरां' क. ४. 'प्रमादात्' क-पुस्तके नास्ति. ५. 'गोवर्गे' ख. ६. तेनेत्यादि भवतीत्यन्तं क-पुस्तके नास्ति. ७. 'इति इत्यत्र च विवक्षा अविवक्षा च' ख. ८. 'पाशवासुकि' क. ९. 'संबुद्धौ' ख-पुस्तके नास्ति. १०. 'सति' क. ११. 'धृतौष्ठ' ख.

अत्र निम्नग्नाभेरिति[1] मनुष्यजातेरविवक्षेति ङीप् न कृतः । 'सुतनु जहिहि कोपं[2]—' इत्यत्र मनुष्यजातेर्विवक्षेति[3] सुतनुशब्दात् 'ऊङुतः' इत्यूङि सति[4] ह्रस्वत्वे सुतन्विति सिध्यति[5] । 'वरतनुरथवासौ नैव दृष्टा त्वया मे'[6] । अत्र मनुष्यजातेरविवक्षेत्यूङ् न कृतः ।

**ऊकारान्तादप्यूङ्प्रवृत्तेः ॥ ४८ ॥**

उत ऊङ् विहितः । ऊकारान्तादपि क्वचिद्भवति । आचार्यप्रवृत्तेः । कासौ प्रवृत्तिः । 'अप्राणिजातेश्चारज्ज्वादीनाम्' इति अलाबूः कर्कन्धूरित्युदाहरणम् । तेन 'सुभ्रु[7] किं संभ्रमेण' । अत्र[8] सुभ्रुशब्द ऊङि सिद्धो भवति । ऊङि त्वसति सुभ्रूरिति[9] स्यात् ।

**कार्तिकीय इति ठञ् दुर्धरः ॥ ४९ ॥**

'कार्तिकीयो नभस्वान्' इत्यत्र 'कालाट्ठञ्' इति ठञ् दुर्धरः । ठञ्भवनं[10] दुःखेन ध्रियत इति ।

**शार्वरमिति च ॥ ५० ॥**

'शार्वरं तमः' इत्यत्र च 'कालाट्ठञ्' इति ठञ् दुर्धरः ।

**शाश्वतमिति प्रयुक्तेः[11] ॥ ५१ ॥**

'शाश्वतं ज्योतिः' इत्यत्र शाश्वतमिति न सिद्ध्यति । 'कालाट्ठञ्' इति ठञ्प्रसङ्गात् । 'येषां च विरोधः शाश्वतिकः' इति सूत्रकारस्यापि प्रयोगः । आह—प्रयुक्तेः । 'शाश्वते प्रतिषेधः' इति प्रयोगात् शाश्वतमिति भवति ।

**राजवंश्यादयः साध्वर्थे ये[12] भवन्ति ॥ ५२ ॥**

राजवंश्याः सूर्यवंश्या इत्यादयः[13] शब्दाः 'तत्र साधुः' इत्यनेन साध्वर्थे ये [यति] प्रत्यये सति साधवो भवन्ति । भवार्थे पुनर्दिगादिपाठेऽपि वंश[14]शब्दस्य वंशशब्दान्तान्न यत्प्रत्ययः । तदन्तविधेः प्रतिषेधात् ।

---

१. 'निम्ननाभिः' ख. २. 'मानं' क. ३. 'सुतनुशब्दान्मनुष्यजातेः' ख. ४. 'ऊङ् कृत ऊङि सति' ख. ५. 'पूर्ववत् ह्रस्वत्वे सुतनुशब्दः सिध्यति' ख. ६. 'प्रिया मे' ख. ७. 'किं सुभ्रु' क. ८. 'इत्यत्र सुभ्रुशब्दादूङ् सिद्धो भवति' ख. ९. 'हे सुभ्रू' ख. १०. 'भवन्' क. ११. 'प्रयुक्तः' क. १२. 'ये सति' ख. १३. 'इत्यादयः साधावर्थे यो यस्तत्र साधुरिति तस्मिन्सति भवन्तीति' क. १४. 'वंशशब्दस्य' ख-पुस्तके नास्ति.

**दारवंशब्दो दुष्प्रयुक्तः ॥ ५३ ॥**

'दारवं पात्रम्' इति दारवशब्दो दुष्प्रयुक्तः। 'नित्यं वृद्धशरादिभ्यः' इति मयटा भवितव्यम्। ननु विकारावयवयोरर्थयोर्मयड् विधीयते। अत्र तु दारुण इदमिति विवक्षायां दारवमिति भविष्यति। नैवमपि स्यात्। 'वृद्धाच्छः' इति च्छाविधानात्।

**मुग्धिमादिष्विमनिज् मृग्यः ॥ ५४ ॥**

मुग्धिमाप्रौढिमेत्यादिषु इमनिज् मृग्यः अन्वेषणीय इति।

**औपम्यादयश्चातुर्वर्ण्यवत् ॥ ५५ ॥**

औपम्यं सांनिध्यमित्यादयश्चातुर्वर्ण्यवत् 'गुणवचन—' इत्यत्र 'चातुर्वर्ण्यादीनां [स्वार्थे] उपसंख्यानम्' इति वार्तिकात्स्वार्थिकष्यञन्ताः।

**ष्यञः पित्करणादीकारो बहुलम् ॥ ५६ ॥**

'गुणवचनब्राह्मणादिभ्यः' इति यः ष्यञ् तस्य पित्करणादीकारो भवति। स बहुलम्। ब्राह्मण्यमित्यादिषु न भवति।

**सामग्र्यमित्यादिषु विकल्पेन ॥ ५७ ॥**

सामग्र्यं सामग्री। वैदग्ध्यं वैदग्धीति।

**धन्वीति व्रीह्यादिषु पाठात् ॥ ५८ ॥**

व्रीह्यादिषु धन्वशब्दस्य पाठात् धन्वीति इनौ सति सिद्धो भवति।

**चतुरस्रशोभीति णिनौ ॥ ५९ ॥**

'बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन' इत्यत्र चतुरस्रशोभीति न युक्तम्। व्रीह्यादिषु शोभाशब्दस्य पाठेऽपि इनिरत्र न सिध्यति। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। भवतु वा तदन्तविधिः। कर्मधारयान्मत्वर्थीयानुपपत्तिः। लघुत्वात्प्रक्रमस्येति बहुव्रीहिणैव भवितव्यम्। तत्कथमिति मत्वर्थीयस्याप्राप्तौ चतुरस्रशोभीति-

१. 'इत्यादिषु' ख. २. 'चातुर्वर्ण्यवत्स्वार्थिकः ष्यञ् स्यात्' क. ३. 'गुणवचने' ख. ४. 'स' क-पुस्तके नास्ति. ५. क-पुस्तके सामग्र्यमित्यादिसूत्रं पूर्वसूत्रवृत्तावन्तर्भावितम्. ६. 'विकल्पितः' क. ७. 'इति' ख-पुस्तके नास्ति. ८. 'धन्वन्' ख. ९. 'युक्तः। व्रीह्यादौ शोभाशब्दपाठेऽपि' क. १०. 'प्रातिपदिकेनेति' क. ११. 'भवितव्यमिति मत्वर्थीयस्याप्राप्तिः। तत्कथं चतुरस्र' क.

प्रयोगः । आह—णिनौ । चतुरस्रं शोभत इति ताच्छील्किे णिनावयं प्रयोगः । अथ 'अनुमेयशोभि' इति कथम् । नह्यत्र पूर्ववद्वृत्तिः[1] शक्या कर्तुमिति शुभेः साधुकारिण्यावश्यके वा णिनिं कृत्वा तदन्तादभावप्रत्यये[2] पश्चाद्बहुव्रीहिः कर्तव्यः । अनुमेयं शोभित्वं यस्येति । भावप्रत्ययस्तु गतार्थत्वान्न प्रयुक्तः[3] । यथा 'निराकुलं[4] तिष्ठति', 'सधीरमुवाच' इति ।

**कञ्चुकीया इति क्यचि ॥ ६० ॥**

'जीवन्ति राजमहिषीमनु कञ्चुकीयाः' इति कथम् । मत्वर्थीयस्य च्छप्रत्ययस्याभावात् । आह[5]—क्यचि । क्यचि प्रत्यये सति कञ्चुकीया इति भवति । कञ्चुकमात्मन इच्छन्ति कञ्चुकीयाः ।

**बौद्धप्रतियोग्यपेक्षायामप्यातिशायनिकाः ॥ ६१ ॥**

बौद्धस्य प्रतियोगिनोऽपेक्षायामप्यातिशायनिकास्तरबादयो भवन्ति । 'घनतरं तमः', 'बहुलतरं[6] प्रेम' इति ।

**कौशिलादय इलचि वर्णलोपात् ॥ ६२ ॥**

कौशिलवासिल[7] इत्यादयः कथम्[8] । आह—कौशिकवासिष्ठादिभ्यः शब्देभ्यो नीतावनुकम्पायां वा[9] 'घनिलचौ च' इति इलचि कृते 'ठाजादावूर्ध्वं द्वितीयादचः' इति वर्णलोपात्सिध्यन्ति[10] ।

**मौक्तिकमिति विनयादिपाठात्[11] ॥ ६३ ॥**

मुक्तैव[12] मौक्तिकमिति विनयादिपाठाद्द्रष्टव्यम् । स्वार्थिकाश्च[13] प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति नपुंसकत्वम् ॥ ९-१.

**प्रातिभादयः[14] प्रज्ञादिषु ॥ ६४ ॥**

प्रातिभादयः[15] शब्दाः प्रज्ञादिषु द्रष्टव्याः । प्रतिभा-विकृति-द्विता-

---

१. 'पूर्ववत्कृदवृत्तिः' ख. २. 'तदन्ताच्च भावप्रत्ययः' ख. ३. युक्तः' क. ४. 'निराकुलः' ख. ५. 'अत आह' ख. ६. 'बहुतरं' क. ७. 'वाशिल' ख. ८. 'कथं कौशिकवशिष्ठादिभ्यो' ख. ९. 'वा' ख-पुस्तके नास्ति. १०. 'सिध्यतीति' क. ११. 'योगात्' ख. १२. 'मुक्तैव' क-पुस्तके नास्ति. १३. ख-पुस्तके 'स्वार्थिकाश्च—वर्तन्ते' इति सूत्रत्वेन गणितम्. १४. 'प्रतिभादयः' क. १५. 'प्रतिभादयः' क.

दिभ्यः शब्देभ्यः प्रज्ञादिपाठादणि स्वार्थिके कृते प्रातिभं वैकृतं द्वैतमित्यादयः प्रयोगाः सिद्ध्यन्तीति ।

**न सरजसमित्यनव्ययीभावे ॥ ६५ ॥**

'मधु सरजसं मध्येपद्मं पिबन्ति शिलीमुखाः' इत्यादिषु सरजसमिति न युक्तः प्रयोगः[1] अनव्ययीभावे । अव्ययीभाव एव सरजसशब्दस्येष्टत्वात् ।

**न धृतधनुषीत्यसंज्ञायाम् ॥ ६६ ॥**

'धृतधनुषि शौर्यशालिनि' इत्यत्र धृतधनुषीत्यसंज्ञायां न युक्तः प्रयोगः[2] । 'धनुषश्च' इत्यनङ्विधानात् । संज्ञायां ह्यनङ्[3] विकल्पितः 'वा-संज्ञायाम्' इति ।

**दुर्गन्धिपद इद्दुर्लभः[4] ॥ ६७ ॥**

'दुर्गन्धिः कायः' इत्यादिषु[5] दुर्गन्धिपदे इत्समासान्तो दुर्लभः । उत्पूत्यादिषु दुःशब्दस्यापाठात् ।

**सुदत्यादयः प्रतिविधेयाः ॥ ६८ ॥**

'सा दक्षरोषात्सुदती ससर्ज' इति, 'शिखरदति पतति रशना' इत्यादिषु सुदत्यादयः शब्दाः[6] प्रतिविधेयाः । दत्रादेश[7]लक्षणाभावात् । तत्र[8] प्रतिविधानम्—"अग्रान्त—' आदिसूत्रे[9] चकारस्यानुक्तसमुच्चयार्थत्वात्सुदत्यादिषु दत्रादेशः" इत्येके । अन्ये तु वर्णयन्ति—सुदत्यादयः स्त्र्यभिधायिनो योगरूढिशब्दाः । तेषु 'स्त्रियां संज्ञायाम्' इति दत्रादेशो विकल्पेन सिद्ध एवेति ।

**क्षतदृढोरस इति न कप् । तदन्तविधिप्रतिषेधात् ॥ ६९ ॥**

'प्लवंगनखकोटिभिः क्षतदृढोरसो राक्षसाः[10]' इत्यत्र दृढोरःशब्दात् 'उरःप्रभृतिभ्यः कप्[11]' इति कप् न कृतः[12] । ग्रहणवता प्रातिपदिकेन[13] तदन्तविधेः प्रतिषेधात् । वाक्यं त्वेवं कर्तव्यम्—क्षतं दृढोरो येषामिति ।

---

१. 'अपि' ख. २. 'पाठः' क. ३. 'प्रयोगः' क-पुस्तके नास्ति. ४. 'ह्यनाद्विकल्पो' क. ५. 'दुर्गन्धीति दुर्लभः' ख. ६. 'इत्यादिषु समासान्तो' ख. ७. 'शब्दाः' क-पुस्तके नास्ति. ८. 'आदेश' ख. ९. 'तच्च' क. १०. सूत्रेण' ख. ११. 'राक्षसः' इत्यत्र दृढोरस इति उरःप्रभृतिभ्यः' क. १२. 'कप् न कृतः' ख. १३. 'प्रातिपदिकेनेति तदन्तविधि' क.

**अवैहीति वृद्धिरवद्या ॥ ७० ॥**

अवैहीत्यत्र[1] वृद्धिरवद्या । गुण एव युक्त इति ।

**अपाङ्गनेत्रेति लुगलभ्यः ॥ ७१ ॥**

अपाङ्गे नेत्रे यस्याः सेयमपाङ्गनेत्रेत्यत्र लुगलभ्यः । 'अमूर्धमस्तकात्स्वाङ्गादकामे' इति सप्तम्या अलुग्विधानात् ।

**नेष्टाः श्लिष्टप्रियादयः । पुंवद्भावप्रतिषेधात् ॥ ७२ ॥**

श्लिष्टप्रियः वृद्धकान्तः इत्यादयो नेष्टाः । 'स्त्रियाः पुंवत्—' इति पुंवद्भावस्य प्रियादिषु निषेधात् ।

**दृढभक्तिरसौ[2] सर्वत्रेति ॥ ७३ ॥**

'दृढभक्तिरसौ ज्येष्ठे[3] ।' अत्र पूर्वपदस्य 'स्त्रियाम्'[4] इत्यविवक्षितत्वात् ।

**जलजम्बुलतादयो[5] ह्रस्वविधेः ॥ ७४ ॥**

'जलजम्बुलताविलाः स्रवन्त्यः' 'अग्रे कर्कन्धुग्रहणम्' इत्यादिषु कथं जलजम्बुलतादयः प्रयोगाः[6] । आह—ह्रस्वविधेः । 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वविधानात् ।

**तिलकादयोऽजिरादिषु ॥ ७५ ॥**

तिलकादयः शब्दा अजिरादिषु द्रष्टव्याः । अन्यथा तिलकवती कनकवतीत्यादिषु मतुपि 'मतौ बह्वचोऽनजिरादीनाम्'[7] इति दीर्घत्वं स्यात् । केचित्तु वर्णयन्ति—'नद्यां मतुप्' इति यो मतुप् तत्रायं विधिः । तेषां मतेर्नाम[8][illegible]त्यादीनामसिद्धिः ।

**निशम्यनिशमय्यशब्दौ प्रकृतिभेदात् ॥ ७६ ॥**

निशम्यनिशमय्येत्येतौ शब्दौ श्रुत्वेत्येतस्मिन्नर्थे । शमेः[9] 'ल्यपि लघुपूर्वात्' इत्ययादेशे सति निशमय्येति भवितव्यम्, न निशम्येति । आह—प्रकृतिभेदात् । शमेर्दैवादिकस्य[10] निशम्येति रूपम् । 'शमो दर्शने' इति चुरादौ णिचि मित्संज्ञकस्य निशमय्येति रूपम् ।

---

१. 'अवैहि इति वृद्धिरवद्या गुण एवात्र' ख. २. 'दृढभक्तिरिति' ख. ३. 'दृढभक्तिरसौ ज्येष्ठे' क-पुस्तके नास्ति. ४. 'अस्त्रियां विवक्षितत्वात्' क. ५. 'जल' क-पुस्तके नास्ति. ६. 'प्रयोगाः' क-पुस्तके नास्ति. ७. 'बहूचो' ख. ८. 'नामरावती' त्यस्यापि सिद्धिः' क. ९. 'अत्र शमेपि' क. १०. 'शमादेः शमो' क.

**संयम्यनियम्यशब्दावणिजन्तत्वात् ॥ ७७ ॥**

कथं संयम्यनियम्येति । 'ल्यपि लघुपूर्वात्' इति णेरयादेशेन भवितव्यम् । आह—अणिजन्तत्वात् । धातोर्णिच् न कृतः । गतार्थत्वात् । यथा—'वाचं नियच्छति' इति । णिजर्थानवगतौ तु णिच् प्रयुज्यत एव । यथा—'संयमयितुमारब्धः' इति ।

**प्रतीयेति पीङः ॥ ७८ ॥**

प्रपीयेत्ययं शब्दः 'पीङ् पाने' इत्येतस्य । पिबतेर्हि 'न ल्यपि' इतीत्वप्रतिषेधात्प्रपायेति भवति ।

**दूरयतीति वहुलग्रहणात् ॥ ७९ ॥**

'दूरयत्यवनते विवस्वति' इत्यत्र दूरयतीति कथम् । णाविष्ठवद्भावे 'स्थूलदूर–' इत्यादिना गुणलोपयोः कृतयोर्दवयतीति भवितव्यम् । आह—वहुलग्रहणात् । 'प्रातिपदिकाद्धात्वर्थे वहुलमिष्ठवच्च' इत्यत्र वहुलग्रहणात् 'स्थूलदूर–' आदिसूत्रेण यद्विहितं तन्न भविष्यतीति ।

**गच्छतीप्रभृतिष्वनिषेध्यो नुम् ॥ ८० ॥**

'हरति हि वनराजिर्गच्छती श्यामभावम्' इत्यादिषु गच्छतीप्रभृतिषु शब्देषु 'श्यप्श्यनोर्नित्यम्' इति नुमनिषेध्यो निषेद्धुमशक्यः ।

**मित्रेण गोप्त्रेति पुंवद्भावात् ॥ ८१ ॥**

'मित्रेण गोप्त्रा' इति कथम् । गोप्तृणा भवितव्यम् । 'इकोऽचि विभक्तौ' इति नुम्विधानात् । आह—पुंवद्भावात् । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पुंवद्भावेन गोप्त्रेति भवति ।

**वेत्स्यसीति पदभङ्गात् ॥ ८२ ॥**

'पतितं वेत्स्यसि क्षितौ' इत्यत्र वेत्स्यसीति न सिध्यति । इट्प्रसङ्गात् । आह—पदभङ्गात् सिध्यति । वेत्स्यसीति पदं भज्यते वेत्सि—

१. 'नियम्यशब्दौ' क. २. 'तु न' क. ३. 'निच्' ख. ४. 'अयं' ख-पुस्तके नास्ति. ५. 'हि' ख-पुस्तके नास्ति. ६. 'इति ह्रस्वप्रति' ख. ७. 'भवितव्यम्' ख. ८. 'अत्र' ख-पुस्तके नास्ति. ९. 'प्रभृतिभ्यो' ख. १०. 'हरति वचनराजि' क. ११. 'प्रभृतिशब्देषु' क. १२. 'वेत्स्यतीति' क. १३. 'अत आह' ख.

असि[1] । असीत्ययं निपातस्त्वमित्यस्मिन्नर्थे[2] । क्वचिद्वाक्यालंकारे प्रयुज्यते । यथा—'पार्थिव[3] त्वमसि सत्यमभ्यधाः' इति ।

**कामयानशब्दः सिद्धोऽनादिश्चेत् ॥ ८३ ॥**

कामयानशब्दः सिद्धः[4] 'आगमानुशासनमनित्यम्' इति मुक्यकृते[5] यद्यनादिः स्यात्[6] ।

**सौहृददौर्हृदशब्दावणि हृद्भावात् ॥ ८४ ॥**

सुहृदयदुर्हृदयशब्दाभ्यां युवादिपाठादणि कृते हृदयस्य हृद्भावः । आदिवृद्धौ सौहृददौर्हृदशब्दौ भवतः[7] । सुहृद्दुर्हृच्छब्दाभ्यां युवादिपाठादेवाणि कृते 'हृद्भगसिन्ध्वन्ते—' इति हृदन्तस्य तद्धितेऽणि कृते सत्युभयपदवृद्धौ[8] सत्यां सौहार्दं दौहार्दमिति भवति ।

**विरम इति निपातनात् ॥ ८५ ॥**

रमेरनुदात्तोपदेशत्वात् 'नोदात्तोपदेशस्य' इत्यादिना वृद्धिप्रतिषेधस्याभावात्कथं विरम इति । आह—निपातनात् । निपातनं तु 'यम उपरमे' इत्यत्रोपरम इति । अतन्त्रं चोपसर्ग इति[9] ।

**उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया ॥ ८६ ॥**

उपर्यादिषु शब्देषु सामीप्ये[10] द्विरुक्तेषु 'उपर्यध्यधसः सामीप्ये' इत्यनेन उपर्यादिषु त्रिषु[11] 'द्वितीयाम्रेडितान्तेषु' इति द्वितीया । वीप्सायां तु द्विरुक्तेषु षष्ठ्येव भवति । 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः' ।

**मन्दंमन्दमित्यप्रकारार्थत्वे ॥ ८७ ॥**[12]

'मन्दं मन्दं नुदति[13] पवनः' इत्यत्र मन्दंमन्दमित्यप्रकारार्थे भवति । प्रकारार्थत्वे तु 'प्रकारे गुणवचनस्य' इति द्विर्वचने कृते कर्मधारयवद्भावे मन्दमन्दमिति प्रयोगः । मन्दंमन्दमित्यत्र तु[14] 'नित्यवीप्सयोः' इति द्वि-

---

१. 'असि' ख-पुस्तके नास्ति. २. 'नित्यनिपातः । त्वमित्येतस्मिन्नर्थे' क. ३. 'पार्थिवः' ख. ४. 'सिद्धः' ख-पुस्तके नास्ति. ५. 'युक्यकृते' ख. ६. 'स्यादिति' क. ७. 'भवत इति' क. ८. 'ऽणीत्युभयपद' क. ९. 'इत्यत्र चोपसर्ग इति' क. १०. 'सामीप्येषु' ख. ११. 'त्रिषु' क-पुस्तके नास्ति. १२. 'इत्यत्र प्रकारार्थत्वे' ख. १३. 'तुदति' ख. १४. 'तु' ख-पुस्तके नास्ति.

र्वचनम् । अनेकभागात्मकस्य तुदेर्यदा सर्वे भागा मन्दत्वेन व्याप्तुमिष्टा भवन्ति तदा वीप्सेति ।

**न निद्राद्रुगिति । भष्भावप्राप्तेः ॥ ८८ ॥**

'निद्राद्रुकाद्रवेयच्छविरुपरिलसद्धर्घरो वारिवाहः' इत्यत्र निद्राद्रुगिति न युक्तः । 'एकाचो बशो भष्–' इति भष्भावप्राप्तेः । अनुप्रासप्रियैस्त्वपभ्रंशः कृतः ।

**निष्यन्द इति षत्वं चिन्त्यम् ॥ ८९ ॥**

नह्यत्र षत्वलक्षणमस्ति । कस्कादिपाठोऽप्यस्य न निश्चितः ।

**नाङ्गुलिसङ्ग इति । मूर्धन्यविधेः ॥ ९० ॥**

'म्लायन्त्यङ्गुलिसङ्गेऽपि कोमलाः कुसुमस्रजः' इत्यत्राङ्गुलिसङ्ग इति न युक्तः । 'समासेऽङ्गुलेः सङ्गः' इति मूर्धन्यविधानात् ।

**तेनावन्तिसेनादयः प्रत्युक्ताः ॥ ९१ ॥**

तेनाङ्गुलिसङ्ग इत्यनेनावन्तिसेन इन्दुसेन एवमादयः शब्दाः प्रत्युक्ताः प्रत्याख्याताः । सुषामादिषु 'एति संज्ञायामगात्' इति मूर्धन्यविधानात् ।

**नेन्द्रवाहने णत्वम् । आहितत्वस्याविवक्षितत्वात् ॥ ९२ ॥**

'कुथेन नागेन्द्रमिवेन्द्रवाहनम्' इत्यत्रेन्द्रवाहनशब्दे 'वाहनमाहितात्' इति णत्वं न भवति । आहितत्वस्याविवक्षितत्वात् । स्वस्वामिभावमात्रं ह्यत्र विवक्षितम् । तेन सिद्धमिन्द्रवाहनमिति ।

सदसन्तो मया शब्दा विधिनोल्पेन दर्शिताः ।
अनयैव दिशा कार्यं शेषाणामप्यवेक्षणम् ॥

इति काव्यालंकारसूत्रवृत्तौ प्रायोगिके पञ्चमेऽधिकरणे द्वितीयोऽध्यायः ।
शब्दशुद्धिः ।

**समाप्तं चेदं प्रायोगिकं पञ्चममधिकरणम् ।**

---

**ग्रन्थश्च समाप्तः ।**

---

१. 'तुदेः' ख. २. 'ध्रुगिति' क. ३. 'ध्रुक्' क. ४. 'ध्रुगिति' क. ५. 'त्वयमपभ्रंशः' क. ६. 'न' क-पुस्तके नास्ति. ७. 'अवन्तिसेना इत्येवमादयः' ख. ८. 'प्रत्याख्याताः' क-पुस्तके नास्ति. ९. 'सुषमादिष्विति संज्ञायां मूर्धन्य' ख. १०. 'इन्द्रवाहनशब्दे' क. ११. 'ह्यत्र' ख-पुस्तके नास्ति. १२. 'विधिनाल्पेन न' ख. १३. 'दोषाणां' क.

